# ॥ सामविधानब्राह्मणम् ॥

( सामवेदस्य तृतीयं ब्राह्मणम् अनुब्राह्मणं वा )



सकलवेदभाष्यकारभगवत्सायणाचार्यविरचितेन

'वेदार्थप्रकाश'नाममाधवीयभाष्येण,

सामश्रमीतिलब्धप्रतिष्ठावङ्गश्रीसत्यव्रतभट्टाचार्यकृतेन

बङ्गानुवादेन च समलङ्कृतम् ।



कलिकाता—सत्ययन्त्रे

( १९-१, चीपिस् लेन । यन्त्राध्यक्षाचार्येण )

श्रीमहेन्द्रनाथसरकारेण मुद्रितं प्रकाशितञ्च ।

“भद्र भद्रं तन्न आ सुव”

# ॥ सामविधानं ब्राह्मणम् ॥

अथ खल्विदं सामवेदीयाष्टब्राह्मणेषु तृतीयं मित्याह सायणाचार्यः। द्रष्टव्यं तदेतद्भाष्यभूमिकायां मपि— ‘षड्विंशाख्यं द्वितीयं स्यात्, ततः सामविधिर्भवेत्’-इति ( २पृ० )। ब्राह्मणग्रन्थानां च वेदत्व मुररीकार्यं मेव ; आपस्तम्बादीनां ‘मन्त्रब्राह्मणयोर्वेदनामधेयम्’-इत्येवमादुराप्ताः (य०प०सू०३४.)। सर्वस्यैव हि वेदस्य मीमांसकादिनयेऽपौरुषेयत्वम्, नैयायिकादिनये ईश्वरकृतत्वम्, पौराणिकादिनये प्रजापतिवक्त्रविनिर्गतत्वम् ; तदस्य रचनाकालनिर्णयः कथङ्कारं भवेन्नाम ? अस्ति चैतदुपसंहरणखण्डे ‘प्रजापतिर्बृहस्पतये प्रोवाच’-इत्यादि ( १८६पृ० )।

परे तु ब्रुवते,— नेदं ब्राह्मणम् ! अनुब्राह्मणत्वेऽप्यस्य संशय एव। किन्त्वैतिहासिकदृष्ट्या त्वस्य स एव प्रणयनकालः स्यात्, यदेष्टिहोत्रसोमाद्यात्मकविविधयागाना मादरातिशयो न्यूनीभवितु मारेभे, मारणोच्चाटनादिविधायकस्य तन्त्रशास्त्रस्याविर्भावश्चाभ्युन्मुखः.; अपिवा तान्त्रिकक्रियाकलापप्रावल्यकाले एवाय मारचितः, तस्मान्मार्गात् प्रत्यावर्त्तयिषुणा केनचिद्वेदविदुषा,— वैदिकमन्त्रेणाप्युच्चाटनादिकं सिद्धं भवत्येव, तत् किं पञ्चमकारादिसाधनजुगुप्सिततान्त्रिकमार्गेणेति बोधयितु मिति।

‘काहल मुक्त्वा’-इति- ( ५५ पृ० ) वचनादस्य प्राचीनत्व मपि ; न ह्येतत्सहस्राब्दी-लिखिते क्वचिदपि सन्दर्भे ऽस्मील वाचकस्य तथाविधान्यार्थस्य वा काहलशब्दस्य प्रयोगो दृश्यते अपिचेह ‘विनायकम्प्रीणाति’,-‘स्कन्दम्प्रीणाति’-इतिवाक्यद्वयदर्श मादवगम्यते ऽत्र भारते स्कन्दार्चनप्रचलनादूर्द्धम् ‘गणेश’ भास्कर

रुद्रं केशवं कौशिकीं तथा'-इति पञ्चायतनपूजाचलनाच्च प्रागेव स्यादेष विरचित इति ; अन्यथा स्याता मिह 'सूर्यसंहिता'-'देवी-संहिता',-इत्येते ग्रपि; न स्यात् 'स्कन्दसंहिता'-विधिरिति दिक्।

अथात्र 'स यदा गायत्रं बृहत्यां गायति'-इत्यादिना (११ पृ०) सामगपरीक्षणोपायः सम्यगुपदिष्टः ; परं तथा परीक्षणे लब्ध न जाने कः को भवेत् सामगं मन्यमानः ?

'ते देवाः प्रजापति मुपाधावन्'-इत्यादि-( १४ पृ० ) ग्रन्थस्तु मीमांसाशास्त्रविरुद्धः ; 'अपि वा तदधिकारान्मनुष्यधर्मः स्यात्' -इत्येवमादिभिर्योगेषु मनुष्याणा मेवाधिकारनिर्णयात् ( जै० सू० ६.७.३२. )। वैखानसाः किल बभूवुर्मन्त्रदृशः (ऋ० स० ९.६६.), तेषां यज्ञानधिकारित्वकथनपूर्वकः स्वाध्यायाध्ययनोपदेशारम्भश्च ( १५पृ० ) नास्माकं मनस्युस्वति।

'अनश्नन् संहितासहस्रेण'-इति ( १६पृ० ) हि पूर्णशता-युषा मपि मनुष्याणां न सम्भवति, 'षष्ठापतापशतसहस्रेण वा' -इति तु ततोऽप्यसम्भवः। एव मसम्भवं मत्वानैरेव जैमिन्या-दिभिः सहस्रसंवत्सरसाध्ये विश्वसृजामयने श्रुतः संवत्सरशब्दो दिनपर इति सिद्धान्तितम् ( ई० द० ६. ७. ३१—४० सू०। अधि० १२। ता० ब्रा० २५. १८. ७. सा० भा० )।

'वेशस्थाः प्रव्रजिताश्च वश्या भवन्ति ( ११४ पृ० )'—इत्येव-मादिवचनानि न युज्यन्ते अनूचानोपदेशाय। तृतीयाध्यायीयः षष्ठखण्डस्तु एतच्छताब्दान्तजातानां नूनं भवेद्धासायैव; किं वच्मि ततः सप्तमस्य खण्डस्यान्धविश्वासमात्रानुसरणीयस्य। त्रैलोक्याधिपत्यकामप्रयोगस्तु ( १८३पृ० ) न जाने कदा कस्य वा प्रेक्षावतोऽभिधेयवचनो बभूवेति।

অথ সকলবেদভাষ্যকারস্য ভগবতঃ সায়ণাচার্য্যস্য ব্যাখ্যানে মাহাত্ম্যস্যাল্পধিয়ঃ কিমস্তি বর্ণনীয়ত্বম্, তথাপ্যুপলভ্যতে চাস্য ত্বরান্বিতো লিপিকরপ্রমাদপ্রবাহজো বা দোষঃ ক্বচিৎ ক্বচিদিতি। তদত্র 'অস্য প্রেষা'-ইত্যস্যাঃ ষট্সামস্বীকরণম্ ( ২৬ পৃ০ ), 'সুর-সংযুক্ত'-ইতি (১৮৫) পদস্যাব্যাখ্যানঞ্চৈতদ্ দ্বয়ং স্থালীপুলাকন্যায়েন স্যান্নিদর্শন মিতি ॥

কলিকাতা—রাজন্বতী। } আবসথস্থীসত্যব্রতসামশ্রমী।
সংবৎ ১৯৫১, মাঘ-শুক্লঃ। }

---

## দ্বিতীয়বারের বিজ্ঞাপন।

এবার মূল ও ভাষ্য, উভয়ই ভালরূপে শোধিত করিবার জন্য চেষ্টা করিয়াছি এবং পূর্ব্বকৃত সেই বাঙ্গলা ব্যাখ্যাই শোধন সহ কিছু কিছু পরিবর্ত্তন করিয়া সরল অনুবাদে পরিণত করিতে প্রয়াস পাইয়াছি। এই ব্রাহ্মণের উপকারিতা বুঝাইবার জন্য ইহাতে যে যে বিষয় উপদিষ্ট হইয়াছে, তৎসমস্তই সূচীপত্রে সংক্ষেপে বর্ণন করা হইল। এতদীয় প্রায় সমস্ত সামই মৎসঙ্কলিত ও মদনুবাদ সংবলিত, শকাব্দা ১৭৯৩ ও ৯৭ মুদ্রিত, ভাগদ্বয় "সাম-সূচী"তে প্রকাশিত আছে, অতএব সামগুলির স্থাননির্ণয়-প্রকাশের জন্য এবার কোনরূপ যত্ন করা স-প্রয়োজন বিবেচিত হইল না ॥

কলিকাতা। } শ্রীসত্যব্রত শর্ম্মা।
শকাব্দা ১৮১৬। }

# প্রথমবারের বিজ্ঞাপন।

( যৎকিঞ্চিৎ শোধিত )

---

সামবেদের আটখানি ব্রাহ্মণ গ্রন্থ আছে। ১ম প্রৌঢ় অথবা তাণ্ড্য, ২য় ষড়্‌-বিংশ, ৩য় সামবিধান, ৪র্থ আর্ষেয়, ৫ম দৈবত, ৬ষ্ঠ উপনিষদ্ বা মন্ত্র, ৭ম সংহিতোপনিষৎ ও ৮ম বংশ। প্রৌঢ় ব্রাহ্মণে এবং ষড়্‌বিংশ ব্রাহ্মণে যজ্ঞাধিকারীদিগের স্বর্গাদি-ফল-সিদ্ধ্যর্থ একাহ, অহীন ও সত্রাত্মক সোমযাগের এবং অন্যান্য বিবিধ ক্রতুর ঔদ্‌গাত্র বিহিত আছে। এই সামবিধান নামক তৃতীয় ব্রাহ্মণে, উল্লিখিত ব্রাহ্মণদ্বয়ে প্রতিপাদিত যাগাদির অনুষ্ঠানে অসমর্থ দ্বিজগণের শুদ্ধির নিমিত্ত কৃচ্ছ্রাদি ত্রিবিধ ব্রত উপপাতক, মহাপাতক প্রভৃতির প্রায়শ্চিত্তের জন্য বহুতর সামাধ্যয়ন এবং ‘রুদ্রসংহিতা’, ‘বিষ্ণুসংহিতা’ প্রভৃতি সপ্তবিধ সামসমষ্টি বিহিত হইয়াছে। অতএব ইহার নাম সামবিধান।

সম্প্রতি এই ব্রাহ্মণের পদগুলি আর্য়মুখে যথাবৎ উদ্ধৃত পূর্ব্বক সংস্কৃত টীকাকারদিগের রীত্যনুসারে বঙ্গভাষায় ব্যাখ্যান করিতে প্রবৃত্ত হইলাম। অবলম্বিত নিয়মে, সংস্কৃতানুশীলনে নিবিষ্ট ছাত্রদিগেরও বিশেষ উপকার দর্শিতে পারিবে॥

**“स्मागम-प्रवणस्त्वाहं नापवाद्यः स्खलन्नपि ।**
**न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥”**

(भट्टकुमारिल)

কলিকাতা।
শকাব্দা ১৭৯২

শ্রীসত্যব্রত শর্ম্মা।

# সূচীপত্র।

## ॥ सामविधानब्राह्मणस्य सूचीपत्रम् ॥

—०*०—

पृ०



———

# अथ

# ॥ सामविधानब्राह्मणम् ॥

(तत्र)

## ॥ सायणभाष्यमुखबन्धः ॥

—∘⌒∘—

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत् सायणाचार्यं* वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुः सायणाचार्यो † वेदार्थं वक्तुमुद्यतः ॥ ४ ॥

---

*, † 'आदिशत् सायणाचार्यं—कृपालुर्माधवाचार्यो'-इति ए. सी. मु० ताण्ड्यमहा-ब्राह्मणभाष्यपाठः । 'आदिशन्माधवाचार्यं—कृपालुर्माधवाचार्यो'-इति मूलर् मु०, ऋ० सं० भाष्यपाठः । तथा ए॰सी. मु० तैत्तिरीयसंहिताब्राह्मणयोरैतरेयब्राह्मणस्य च भाष्येषु दृश्यते । 'आदिशन्माधवाचार्यं—कृपालुः सायणाचार्यो'-इति ए. सी. मु०, तै० ब्रा० भा० पाठः । सामवेदस्य पूर्वोत्तरसंहितयोः षड्विंशादिसप्तब्राह्मणानां च भाष्येषु, अद्याप्यमुद्रित-काण्व-संहिताशतपथब्राह्मणभाष्ययोश्च 'आदिशत् सायणाचार्यं—कृपालुः सायणाचार्यो'-इत्येव मेव । लिपिकरपाण्डिता मेवैवम्पाठवैविध्ये निदानम् । वस्तुतो मूलर्मुद्रितपाठ एव साधुः स्यात्; 'ये पूर्वोत्तरमीमांसे'-इत्यादिस्वारस्यादित्यस्माकम् ।

व्याख्यातावृग्यजुर्वेदौ, सामवेदेऽपि संहिता।
व्याख्याता, ब्राह्मणस्याद्य व्याख्यानं सम्प्रवर्त्तते॥ ५॥
अष्टौ हि ब्राह्मणग्रन्थाः प्रौढ़ं ब्राह्मण मादिमम्।
षड्विंशाख्यं द्वितीयं स्यात्ततः सामविधिर्भवेत्॥ ६॥
आर्षेयं दैवताध्यायं मन्त्रं वोपनिषत्ततः*।
संहितोपनिषद् वंशो ग्रन्था अष्टावितीरिताः॥ ७॥

तत्र महाषड्विंशाख्ययोः† ग्रन्थयोः यज्ञाधिकारिणां स्वर्गादिफलप्राप्तये एकाहाहीनसत्रात्मका महाक्रतवः‡ प्रतिपादिताः; अथ सामविधानाख्ये तृतीये ब्राह्मणे ग्रन्थे तेष्वनधिकृतानां वक्ष्यमाणाना मजपृश्निवैखानसादीनां, तेष्वशक्ताना मन्येषाञ्च शुद्ध्यर्थं कृच्छ्रादिप्रायश्चित्तानि, तैरपहतपाप्मनां स्वर्गादिफलप्राप्तये बहुविधान्याधानाग्निहोत्रादिप्रत्याम्नायरूपाणि सामानि विधास्यन्ते। तत एवास्य सामविधान मिति नाम सम्पन्नम्॥

---

* 'भवेदुपनिषत्ततः'–इति च पाठः।

† ताण्ड्यमहाब्राह्मणे षड्विंशब्राह्मणे चेत्यर्थः।

‡ यागस्त्रिविधः; इष्टिहोत्रसोमभेदात्। तत्र सोम एव महाक्रतुः। स च पुनस्त्रिविधः; एकाहाहीनसत्रभेदात्। एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः, द्विरात्रमारभ्य एकादशरात्रपर्य्यन्ता अहीनाः, त्रयोदशरात्रमारभ्य सहस्रसंवत्सरपर्य्यन्तानि सत्राणि, द्वादशाहस्तु अहीनः सत्रात्मकश्चेति द्विरूप एव। तद्यथा, शतपथे—आद्ये काण्डे प्रपञ्चेन पौर्णमासेष्टिरीरिता, आधानपुनराधाने अग्निहोत्रं ततः परम्, अथ तृतीयचतुर्थाभ्यामेकाहाहीनसत्रलक्षणसकलसोमयागप्रकृतिभूतचतुःसंस्थो ज्योतिष्टोमः प्रत्यपादि इत्यादि द्रष्टव्यम्।

## ॥ अथ प्रथमः प्रपाठकः ॥

( तत्र )

### ॥ प्रथमः खण्डः ॥

—•❋•—

॥ ओ३म् ॥

ब्रह्म ह वा इद मग्र आसीत् तस्य तेजो रसो ऽत्यरिच्यत स ब्रह्मा समभवत् स तूष्णीं मनसा ऽध्यायत् तस्य यन्मन आसीत् स प्रजापतिरभवत् तस्मात्प्राजापत्यां मनसा जुह्वति मनो हि प्रजापतिस्तस्य द्यौः शिर आसीदुरो ऽन्तरिक्षं मध्यं समुद्रः पृथिवी पादौ (१)

तत्रादौ तावत्प्रजापतिः कृत्स्नं भूतजातं सृष्ट्वा तस्य सामोपजीवनमुपायच्छदिति प्रतिपादयिष्यमाणत्वात्तदुपजीव्यभूतप्रपञ्चसृष्टिप्रतिपादनाय तत्प्रागवस्था माह—ब्रह्म हेति। 'इद' नामरूपात्मकं प्रतीयमानं प्रपञ्चजातम् 'अग्रे' सृष्टेः पूर्वं प्रलयावस्थायां 'ब्रह्म वै आसीत्'। 'ह' प्रसिद्धौ। सा च "सदेव सोम्येद मग्र आसीत् ( छा० उप० ६.२.१. )"–"आत्मा वा इद मेक एवाग्र आसीत् (ऐ० आ० २.४.१.१.)"—इत्यादिश्रुत्यन्तरापेक्षया। 'वै'-

इत्येवकारार्थे। अत्र यः स्थाणुः स पुरुष इतिवदिदं ब्रह्म आसी-दितिबाधायां सामानाधिकरण्यम्। इदं सर्वं कारणरूपं ब्रह्मै-वासीत्; न कार्यं किञ्चिदपीत्यर्थः। नात्र ब्रह्मशब्देन कूटस्थं चैतन्यं विवक्षितम्; तस्याविकारित्वेन पुनः प्राणिकर्मपरिपाक-वेलायां ततो जगदुत्पत्त्यसम्भवात्। तस्मान्मायोपाधिक मेव चैतन्यं विवक्ष्यते। अतोऽय मर्थः— इदं नामरूपघटितं जगत्, पूर्वं तप्तायःपिण्डवन्मायया विभागापन्नं कारणरूपे ब्रह्मणि अव्या-कृतनामरूपं सदा स्थित मित्यर्थः॥

अथ ब्रह्मणः सकाशात् हिरण्यगर्भोत्पत्ति माह—तस्येति। 'तस्य' उक्तलक्षणस्य सिसृक्षोर्ब्रह्मणोऽत्र 'रसः' सारभूतं तेजो-मयाधिष्ठानभूतं स्रष्टव्यविषयसामर्थ्योपेतं सत्त्वाख्यं विज्ञानम् 'अत्यरिच्यत' रजस्तमसी अभिभूय स्वय मेवातिरिक्तो ऽभवत्। 'सः' अतिरिक्तः, सत्त्वगुणो मायांशो 'ब्रह्मा' व्यष्टिसमष्ट्यात्मना परिवृढः, प्राणहिरण्यगर्भसूत्रात्मादिसंज्ञकः 'समभवत्' सम्य-गुत्पन्नोऽभूत्॥

अथ तस्माद्विराडुत्पत्ति माह—स तूष्णी मिति। 'सः' हिरण्य-गर्भाख्यो ब्रह्मा 'तूष्णीं' उपरतसमस्तव्यापारः 'मनसा' केवलेन निर्विषयेण 'अध्यायत्' स्रष्टव्यविषयचिन्ता मकरोत्। 'तस्य' ध्याय-मानस्य ब्रह्मणः 'यन्मनः' यन्मानसम् 'आसीद्' स्रष्टव्योपायविषया करणशक्तिरस्ति, 'सः' सैव मनोरूपा शक्तिः 'प्रजापतिः' प्रजानां स्रष्टा एतन्नामकोऽपि ब्रह्मादिसंज्ञया व्यवह्रियमाणः 'अभवत्' सम्भूतः। अत्र ब्रह्मप्रजापत्योर्यद्यपि सृष्टिरूपकार्यैकत्वादेकत्वम्, तथापि ब्रह्मणः स्थूलसूक्ष्मकार्यशरीरोपाधिभेदेन भेदनिर्देशः। अस्ति च श्रुतिषु सर्वत्र भेदेन निर्देशः। तथाहि "त्वं रुद्रस्त्वं

ब्रह्म त्वं प्रजापतिः"-इत्यादिषु। तथोपरिष्टादपि "क्रुष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वा"-इति भेदेन निर्देक्ष्यते ॥

अथ प्रजापतेर्मनःसम्बन्धित्वात् प्रसङ्गेन तदीये कर्मणि कञ्चिद्विशेष माह—तस्मादिति। यस्मात् प्रजापतिर्ब्रह्मणो मनोरूपोऽभूत्, 'तस्मात्' 'प्राजापत्यां' प्रजापतिदेवताका माहुतिं 'मनसा' मानसेन, मन्त्र मनुच्चारयन्त एव 'जुह्वति'। अस्य मनोरूपत्वं प्रसिद्ध मेवेत्याह 'प्रजापतिः' 'मनो हि' ब्रह्मणो मनोरूपः खलु। 'हि'-शब्दो "मन इव हि प्रजापतिः"-इत्यादिश्रुत्यन्तरप्रसिद्धिद्योतनार्थः *। अथ तत्प्रजापतेः कृत्स्नप्रपञ्चमयशरीरात्मकता माह—तस्येति। 'तस्य' विराडाख्यस्य प्रजापतेः 'शिरः' उत्तमाङ्गं 'द्यौः' द्युलोकः 'आसीत्'। तथा 'उरः' वक्षः, तदुपलक्षितो मध्यदेशः 'अन्तरिक्षम्' एतदाख्यो द्यावापृथिव्योर्मध्यभाग आसीत्। "अन्तरा क्षान्तं भवति"-इति निरुक्तम् †। तथा 'मध्यं' मध्यभागान्तःप्रदेशवर्त्ति मूत्रोदकम्, आश्रयिण्याश्रयशब्दः। तत् 'समुद्रः' आसीत् ‡। तथा 'पृथिवी' प्रथिता, 'पादौ' पादद्वयस्थानीया आसीत्। एतावता तस्य लोकत्रयात्मकत्व मुक्तम्। अस्य द्योशिरस्त्वाद्यवयवरूपत्वम् उपनिषदि वैश्वानरविद्यायां "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः"—इत्यादिना ( छा० उप० ५.१८.२. ) श्रुतम् ॥ (१)

---

* "तस्मान्मनसा प्रजापतये जुह्वति, मन इव हि प्रजापतिः"-इति तै० सं० २.५.११.५।

† "अन्तरिक्षं कस्मात्? अन्तरा क्षान्तं भवत्यन्तरेमे इति वा शरीरेष्वन्तरक्षय मिति वा" -इति निरु० २. ३. १।

‡ समुद्रश्चेहान्तरिक्षं जलस्थानम्। तथाहि—"तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दिह्यते। समुद्रः कस्मात्? समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येन मापः, सम्मोदन्तेऽस्मिन् भूतानि, समुदको भवति, समुनत्तीति वा तयोर्विभागः"—इति निरु० २. ३. १।

এই নামরূপাত্মক প্রতীয়মান প্রপঞ্চাত্মক কার্য্যসমুদয়ের সৃষ্টির পূর্ব্বে একমাত্র কারণাত্মক ব্রহ্মই ছিলেন। ইহা প্রসিদ্ধ। সেই কারণাত্মক সিসৃক্ষু ব্রহ্মের তেজোময়াধিষ্ঠানস্বরূপ সৃষ্টিকার্য্যের উপযুক্ত সামর্থ্যবিশিষ্ট সত্ত্ব নামক বিজ্ঞান, রজঃ ও তমঃ গুণদ্বয়কে অতিক্রম করিয়া তাঁহা হইতে বিযুক্ত হইল। সেই সত্ত্বগুণ, ব্রহ্মা নামে ব্যবহৃত হইলেন। তিনি সর্ব্বব্যাপার-শূন্য হইয়া মনে মনে স্রষ্টব্য বিষয়সমস্ত ধ্যান করিলেন। ধ্যানে প্রবৃত্ত সেই ব্রহ্মার যে মন, তাহাই প্রজাপতি নামে ব্যবহৃত হইলেন। যেহেতু প্রজাপতি, ব্রহ্মার মনঃস্বরূপ, সেই নিমিত্তই প্রজাপতি-দেবতার উদ্দেশে দেয় আহুতি মনে মনে মন্ত্রোচ্চারণ করিয়া হবন করিবে; মনই প্রজাপতি। ঐ দ্যুলোক, সেই প্রজাপতির শিরঃস্বরূপ; অন্তরীক্ষলোক অর্থাৎ ভূলোক ও দ্যুলোকের মধ্য-স্থান, তাঁহার বক্ষঃস্বরূপ; সমুদ্র অর্থাৎ অন্তরীক্ষস্থ জলস্থান, তাঁহার মধ্যভাগ অর্থাৎ নাভির অধঃস্থিত ও জানুর উপরিস্থ মূত্রোদক-স্থানস্বরূপ এবং এই ভূলোক, তদীয় পাদদ্বয়স্বরূপ রহিয়াছে ॥ (১)

**स वा इदं विश्वम्भूत मसृजत तस्य सामोप-जीवनं प्रायच्छदुपजीवनीयो भवति य एवं वेद (२)**

उक्तलोकत्रयात्मकत्वसिद्धये तत एव जगत्सृष्टिम्, सृष्टस्योप-जीवनाय सामप्रदानञ्चाह—स वै इति। 'वै' शब्दः प्रसिद्धौ। 'सः' खलु प्रजापतिः 'इदं प्रतीयमानं' 'विश्वम्भूत' ब्रह्मेन्द्रदेवतिर्यङ्मनु-ष्यादि भूतजातम् 'असृजत' सृष्टवान्। सृष्टस्य 'तस्य' 'उपजीवनं' जीवनसाधनं, 'साम' 'प्रायच्छत्' प्रकर्षेण दत्तवान् ॥

अथ वेदितुः फल माह—उपेति। 'यः' पुमान् 'एवं' जगतः उपजीवनप्रदानं 'वेद' जानाति, सः सर्वैः 'उपजीवनीयो भवति'।

एनं सर्वे उपजीवन्तीत्यर्थः ; धनकनकादिभिराढ्यो भवतीति यावत् ॥ (२)

সেই প্রজাপতি এই বিশ্ব (অর্থাৎ দেব, তির্য্যক্, মনুষ্যাদি প্রাণিসমূহ) সৃষ্টি করিয়াছেন। এবং সেই সমস্ত সৃষ্ট জীবের জীবনোপায় স্বরূপ রথন্তরাদি নামে প্রসিদ্ধ সাম গান প্রদান করিয়াছেন। যে কেহ এরূপ তত্ত্ব জানে, সে অনেকের উপজীবনীয় হয় অর্থাৎ ঈদৃশ আঢ্য হয়, যে তাঁহাকে আশ্রয় করিয়া অনেকে জীবিকানির্ব্বাহ করে॥ (২)

**तद्योसौ क्रुष्टतम इव साम्नः स्वरस्तं देवा उपजीवन्ति यो ऽवरेषां प्रथमस्तं मनुष्या यो द्वितीयस्तं गन्धर्वाप्सरसो यस्तृतीयस्तं पशवो यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते यः पञ्चमस्त मसुररक्षांꣳसि योऽन्त्यस्त मोषधयो वनस्पतयो यच्चान्यज्जगत् तस्मादाहुः सामैवान्न मिति साम ह्येषा मुपजीवनं प्रायच्छदुपजीवनीयो भवति य एवं वेद (३)**

जगतः सामोपजीवनं प्रायच्छदित्युक्तम्, तस्य कं भागं के उपजीवन्तीति जिज्ञासायां तद्विभज्य दर्शयति—तद्योऽसाविति। अस्याय मर्थः—'उपांश्वव्यतिरिक्ताः सर्वा वाचो मन्द्रमध्यमोत्तमभेदेन त्रिस्थाना भवन्ति। तत्र मन्द्रस्थाना वाक् 'सप्तयमा' क्रुष्टादिसप्तस्वरूपेत्यर्थः। क्रुष्टादय एव यमा उच्यन्ते। ते चोत्तरोत्तरं नीचा भवन्ति। एवं मध्यमोत्तमस्थाने अपि वाचौ वेदितव्ये। अमुमेवार्थं शौनक आह—"परिषदमन्द्रमध्यमोत्तमस्थानान्याहुः सप्त-

यमानि वाचः, अनन्तरश्चात्र यमोऽविशिष्टः सप्त स्वरा ये यमास्ते पृथग्वा"-इति *। अनन्तर मित्यस्य वाक्यस्याय मर्थः— येषु यमेषु 'अनन्तरः' अव्यवहितो 'यमः', सः 'अविशिष्टः' असम्पृष्टविशिष्ट इत्यर्थः; विप्रकृष्टो यमो भेदेन ज्ञातुं शक्यते, न सन्निकृष्ट इति। सप्त स्वरा इत्यस्याय मर्थः— ये यमा इत्युक्ताः 'सप्त', ते 'स्वराः' षड्जादयः † पृथग्वा। क्रुष्टादयः ‡; 'पृथग्वा' षड्जादिभ्योऽन्ये वा बोद्धव्याः। एवं सति 'तत्' तेषु क्रुष्टादिसंज्ञकेषु षड्जादि-सप्तस्वरेषु मध्ये 'योऽसौ' साम्नः सम्बन्धो 'क्रुष्टतम इव'। इवेत्येव-कारार्थे। अत्यन्त मुच्चैः 'स्वरः' एवास्ति गानकाले, 'तं' स्वरं 'देवाः' इन्द्रादयः 'उपजीवन्ति' तेन तृप्ता भवन्तीत्यर्थः। एव मुत्तरेष्वपि योज्यम्। 'यः' च 'अवरेषाम्' अवशिष्टानां षण्णां मध्ये 'प्रथमः' मुख्योऽस्ति, 'तम्' 'मनुष्याः' उपजीवन्ति। 'द्वितीयं' 'गन्धर्वाप्सरसः' गन्धर्वाः अप्सरसश्च उपजीवन्ति। 'तृतीयं' गवादयः 'पशवः'। 'चतुर्थं' 'पितरः' किञ्च 'ये' प्राणिनः सर्वे 'ब्रह्माण्डेषु' 'शेरते' निवसन्ति, ते च। 'पञ्चमं' स्वरम् 'असुररक्षांसि' असुराश्च रक्षांसि च। 'योऽन्त्यः' षष्ठः स्वरः, 'तम्' 'ओषधयो वनस्पतयः' च, 'यच्चान्यद्' अनुक्तं 'जगत्' जात मस्ति, तच्चेति। कृत्स्नजगतः सामोपजीवित्वप्रसिद्धिरुक्तापिचयेत्याह— 'तस्मादाहुः सामैवान्न मिति'। यत एषां देवानां सामोपजीवनं प्रायच्छत्, अत आहु-

---

* ऋक्प्रातिशाख्ये १३,१७ द्रष्टव्यम्।

† 'षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा।
पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः ॥'-इत्यादि ना० शि० १.२.५।

‡ 'प्रथमश्च द्वितीयश्च तृतीयश्च चतुर्थकः।
मन्द्रः क्रुष्टो ह्यतिस्वार एतान् कुर्वन्ति सामगाः ॥-इति ना० शि० १.१.१२।

विन्युक्तप्रकारसामान्यत्वप्रसिद्धानुवादोऽयम्। उक्तार्थस्य वेदितुः फल माह—उपैति ॥ (२)

সামগান সপ্তস্বরাত্মক হইয়া থাকে। তন্মধ্যে যে এই অত্যন্ত উচ্চৈঃস্বর, সেই স্বরকে ইন্দ্রাদিদেবতারা উপজীবন করেন অর্থাৎ সেই স্বরে তাঁহারা পরিতৃপ্ত হএন; অবশিষ্ট ষট্‌স্বরের মধ্যে যাহা প্রথম স্বর, তাহা মনুষ্যেরা; যাহা দ্বিতীয়, তাহা গন্ধর্ব্বেরা এবং অপ্সরোগণ; যাহা তৃতীয়, তাহা পশুরা; যাহা চতুর্থ, তাহা পিতৃগণ এবং অন্যান্য যাবৎ প্রাণী ব্রহ্মাণ্ডে রহিয়াছে, তাহারা; যাহা পঞ্চম, তাহা অসুর এবং রাক্ষসগণ; যাহা শেষ অর্থাৎ ষষ্ঠ, তাহা ফলপাকমাত্রে নাশশীল, যব, গোধূম প্রভৃতি শস্য-বৃক্ষাদি, আম্র পনসাদি তরুগণ এবং আরও যাহা কিছু জগৎ থাকিল, তৎসমস্ত। সেই নিমিত্তই তত্ত্ববেত্তারা বলেন—সামই অন্ন,— সামই এই সমস্ত দৃশ্যাদৃশ্য চরাচরের জীবনোপায়স্বরূপ প্রদান করিয়াছেন। যে কেহ এরূপ তত্ত্ব জানে, সে সকলেরই উপজীবনীয় হয় ॥ (৩)

तस्य ह वा एतस्य साम्न ऋगेवास्थीनि स्वरो माꣳसानि स्तोभा लोमानि यो ह वै साम्नः स्वं यः सुवर्णं वेद स्वं च ह वै साम्नः सुवर्णं च भवति स्वरो वाव साम्नः स्वं तदेव सुवर्णं यो ह वै साम्नः प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च वांवाव साम्नः प्रतिष्ठा यद्वैतद्वागित्यृगेव सर्चि साम प्रतिष्ठितꣳ (४)

प्रजापतिरादिष्टफलसाधनस्वाध्यायाध्ययनार्थञ्च कानिचित्साम्नो ध्यानानि विदधाति। तत्रादौ पुरुषत्वेनावयवकल्पना माह— तस्य हेति। 'तस्य ह वै' उक्तमहिमोपेतस्यैवैतस्येदानीं निर्द्दिश्यमानस्य साम्नः 'ऋगेवास्थीनि' ऋचः साम्नो मुख्याधारत्वादस्थित्वकल्पनम्। स्वराणा मपि ऋगाश्रितत्वादस्थिवहिर्भूतत्वेन मांसत्वकल्पनम्। स्तोभाना मपि * ततो ऽपि वहिर्विषयत्वाल्लोमत्वकल्पनम्।

अथ तस्यैव स्वत्वसुवर्णत्वयोर्ध्यान माह— यो हेति। 'यः' उद्गाता 'ह वै' 'साम्नः' 'स्व' द्रव्य' 'वेद', 'यः' स्वविशेषरूपं 'सुवर्णं' च। किं तदित्याकांक्षाया माह—'स्वरो वाव' क्रुष्टादिसप्तभेदभिन्नः स्वर एव साम्नः 'स्वं' सारिष्ठं सामस्वरूपम्; 'तदेव' 'स्वर एव' 'सुवर्णम्'।

अथान्यत्साम्नो ध्यातव्यं स्वरूप माह— यो हेति। 'यः' उद्गाता साम्नः 'प्रतिष्ठाम्' आस्पदं स्वक माश्रयं 'वेद', स उद्गाता 'प्रति ह तिष्ठति' प्रतिष्ठितः खलु। कुत्रेति तदुच्यते—'अस्मिंश्च लोके' भुवि, 'अमुष्मिंश्च लोके' स्वर्गे। उभयत्र परस्परापेक्षश्चशब्दः। इह जीवन् पश्वादिभिः प्रतिष्ठितो भवति; देहान्ते स्वर्गे सङ्कल्पसिद्धैर्भोगैरित्यर्थः। साम्नः का प्रतिष्ठेति चेत्, उच्यते— 'वाग्वाव साम्नः प्रतिष्ठा'। अत्र वाक्शब्दस्य ऋक्परता माह—

---

* "अधिकञ्च विवर्णं च जैमिनिः स्तोभशब्दत्वात्"–इति जै॰ सू॰ ९. २. ३९। रचितं चैतदधिकरणं माधवाचार्येण—'स्तोभस्य लक्षणं नास्ति किं वास्ति न विवर्णता। आधिक्य मप्यतिव्याप्तं विशिष्टं लक्षणं भवेत्'–इति ११ अधि॰। "अनृगाद्यक्षरम्"–इति चाक्षरतन्त्रम्। स्तोभग्रन्थोऽप्यस्ति सामगानां प्रसिद्धः। स्तोभोपदेशास्त्वक्षरतन्त्रव्याकरणे विशेषतः प्रोक्ताः।

यद्वैतदिति । 'यत् उ एतत्'-इति पदच्छेदः । उ शब्द एवकारार्थे । वागेवेति यदेतदस्ति, सा ऋगेवेति ; अथ ऋचोऽतिरिक्तस्य अन्यस्य वचसो वा इन्द्रियस्य वा अप्रयोजनत्वादिति । तावदृगाश्रयत्व माह— 'ऋचि' गायत्र्यादिच्छन्दोवत्यां 'साम' गीत्यात्मकं रथन्तरादि प्रतिष्ठितम् ॥ (४)

ঋক্-মন্ত্রগুলিই তাদৃশ সামসমূহের অস্থিপুঞ্জ, ক্রুষ্টাদি সপ্ত স্বরই তৎসমস্তের মাংসস্বরূপ এবং হাউ, ঈ, ইড়া প্রভৃতি স্তোভগুলিই তাহাদের লোমাবলি। যে কেহ প্রসিদ্ধ উদ্গাতা হইবে, সে নিশ্চয়ই সামের সামত্ব এবং সৌন্দর্য্য অবগত হইবে; সামের সামত্ব এবং সৌন্দর্য্য নিশ্চয় প্রসিদ্ধ আছে; স্বরই সামের সামত্ব এবং সৌন্দর্য্য। যে কোন প্রসিদ্ধ উদ্‌গাতা নিশ্চয়রূপে সামের অধিষ্ঠান জানে, সেই এ ভূ-লোকে এবং ঐ স্বর্গলোকে নিশ্চয় অধিষ্ঠিত হয়। ঋক্-রূপ বাক্যই সামের অধিষ্ঠান; যাহা ইহা ঋক্ বলিয়া প্রসিদ্ধ, তাহাও বাক্য, বাক্যরূপ ঋকেই রথন্তরাদিনামক সাম গান অধিষ্ঠিত রহিয়াছে ॥ (৪)

स यदा गायत्रं बृहत्यां गायति बार्हतं जगत्यां जागतं त्रिष्टुभि समतां चापद्यते तस्मादेतत्सामेत्याहु समा उ ह वा अस्मिंश्छन्दांसि साम्यादिति* तत्साम्नः सामत्वं क्रुष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वादित्यानां प्रथमः साध्यानां द्वितीयोऽग्नेस्तृतीयो वायोश्चतुर्थः सौमो मन्द्रो मित्रावरुणयोरतिस्वार्य्यः (५)

* सायणदृष्टः पाठः 'साम्यादिति'-इति ।

अथ निर्वचनेन साम प्रशंसति—स यदेति। 'सः' उद्गाता 'यदा' यस्मिन् प्रयोगकाले 'गायत्रं' गायत्रीच्छन्दस्काया मृच्युत्पन्नं साम 'बृहत्यां' बृहतीच्छन्दस्काया मृचि 'गायति', तदा 'समतः मापद्यते' इति सम्बन्धः। तथाहि—"अश्वं न त्वा"-इत्येतस्यां गायत्र्या मृच्युत्पन्नं वारवन्तीयसंज्ञकं गायत्रं साम, "अभि त्वा शूर नोनुमः"-इत्येतस्यां गीयमानं सत् 'समता मापद्यते' *। न्यूनच्छन्दस्कायाम् परिमितं साम अधिकच्छन्दस्कायां गीयमान मपि परिमित मेव भवति, नाक्षरस्वरस्तोभविकारैरतिरिक्तं भवति। एव मुत्तरेष्वपि योज्यम्। तथा बृहत्यां "पुनानः सोम"-इत्यस्या मुत्पन्नं 'बार्हतं' साम, 'जगत्यां' जगतीच्छन्दस्कास्वृक्षु "यज्ञायज्ञा-अभिप्रियाणि-वृषामतीनाम्"-इत्यादिषु गीयमानं सत् 'समता मापद्यते' †। तथा 'जागतं' "प्रत्नस्य वृष्णः"-इत्येतस्यां जगत्या मुत्पन्नं "मूर्द्धानं दिवः"-इत्यादिषु त्रिष्टुप्छन्दस्कासु गीयमानं सत् 'समता मापद्यते' ‡। यस्मादेवं 'तस्मात्' गीत्यात्मिकासु 'सामेत्याह' ब्रूते विद्वज्जनः §। न केवलं बहूनां छन्दसां समत्वात्सामत्वम्, अपि तु 'अस्मिन्' जातावेकवचनम्, एषु बहुषु सामसु रथन्तरादिषु प्रत्येकं 'छन्दांसि' गायत्र्यादीनि 'समा उ ह वै'। 'उ' इत्यवधारणे। 'ह वा' इति प्रसिद्धौ। समान्येव खलु। तत्रोपपत्ति माह—साम्राादिति। समानशब्दः समशब्द-समानार्थः। अकारदीर्घलोपे साम्नादिति। यद्वा समानाम्नानत्वं

---

* अश्वन्न छ० आ० १.१.२.७। वारवन्तीयं गे० गा० १.१.३०। अभि त्वा ३.१.५.१।

† छ० आ० ६.१.२.१। गे०गा०१४.१.२१। ऊ०आ०१.१.४०१ ; ६.२.२.१ ; ६.२.२.६।

‡ आर० आ० ३. ३. ८। आर० गा० ४. २. ७। उ० आ० ४. २. ३. १—३।

§ "साम सम्मित मृचा स्यतेर्वर्चा समं मेन इति नैदानाः"-इति निरु० ७. ३. ६।

साम्नाम्। समानञ्च तदाम्नञ्चेति समानाम्नम्। "समानस्य छन्दसि"–इत्यादिना (पा० ६.३.८३.) समानस्य सत्वे कृते साम्न मिति भवति। तस्य भावः साम्नम्, तस्मात् साम्नात्, समानाम्नानत्वादित्यर्थः। बहूनां हि साम्नां समान मेकच्छन्द आम्नायते ; यस्मात् समानाया मृचि बहूनि सामानि गीयन्ते, 'तत्' तस्मात् अपि 'साम्नः सामत्व' सम्पन्न मिति ॥

अथ क्रुष्टादिसप्तस्वराणां क्रमेण देवता आह— क्रुष्ट इति। यः क्रुष्टाख्य उत्तमः स्वरोऽस्ति तस्य प्रजापतिर्ब्रह्मा विश्वेदेवा वा त्रयो विकल्पेन देवताः। प्रजापतिर्विराट्, ब्रह्मा हिरण्यगर्भ इति विवेकः। शिष्टो निगद-व्याख्यातः। 'मन्द्रः' अवरेषां मध्ये पञ्चमः स्वरः, 'अतिस्वार्यः' षष्ठः ॥ (५)

সেই সামগানকারী উদ্গাতা, যখন গায়ত্রীচ্ছন্দের ঋকে উৎপন্ন সাম, বৃহতীচ্ছন্দের ঋকে এবং বৃহতীচ্ছন্দের ঋকে উৎপন্ন সাম, জগতীচ্ছন্দের ঋকে এবং জগতীচ্ছন্দের উৎপন্ন সাম, ত্রিষ্টুপ্ ছন্দের ঋকে গান করে, তখনই সামগান বিষয়ে বিবিধ ছন্দের সাম্য অবগত হইয়াথাকে। সেই সাম্য নিবন্ধনই "সাম" বলা যায় ;— ছন্দসকল নানাবিধ হইলেও সামগান কালে সকলই নিশ্চয় সমতা প্রাপ্ত হয়। তাহাই সামের সামত্ব। ক্রুষ্ট নামক যে স্বর, তাহা প্রজাপতি-দৈবত অর্থাৎ তদ্দ্বারা প্রজাপতি দেবতা প্রীত হয়েন ; অথবা ব্রহ্ম-দৈবত অথবা বিশ্বদেব-দৈবত। অবশিষ্ট ষট্ স্বরের প্রথম স্বর আদিত্যগণের প্রীতিপ্রদ, দ্বিতীয়টি সাধ্যদিগের প্রীতিপ্রদ, তৃতীয়টি অগ্নির প্রীতিপ্রদ, চতুর্থটি বায়ুর প্রীতিপ্রদ, মন্দ্রনামক পঞ্চম স্বর সোমদেবতার প্রীতিপ্রদ এবং অতিস্বার্য্য নামক ষষ্ঠ স্বরটি মিত্র ও বরুণ দেবদ্বয়ের প্রীতিপ্রদ ॥ (৫)

ते देवाः प्रजापति मुपाधावꣳस्ते ऽब्रुवन् कथ नु वयꣳ स्वर्गं लोक मियामेति तेभ्य एतान् यज्ञक्रतून् प्रायच्छदेतैः स्वर्गं लोक मेष्यथेति तैः स्वर्गं लोक मायन्त्स्वर्गं लोक मेति य एवं वेद (६)

अथ यज्ञानधिकारिणां देवादीनां स्वर्गादिफलाय सामाध्ययनं विधित्सुस्तदधिकारिणां स्वर्गफलाय प्रजापतिर्यज्ञक्रतून् प्रायच्छदित्याह—ते देवा इति। "स वा इदं विश्वम्भूत मसृजत" इत्युक्तेषु ( ६ पृ० ) देवादिषु भूतजातेषु मध्ये 'ते देवाः' केचिद्देवतात्मकाः स्वर्गाख्यसुखविशेषोपायज्ञानार्थं 'प्रजापतिं' स्वपितरम् 'उपाधावन्' अभिप्रापाः। 'तेभ्यः' स्वर्गसाधनत्वेन 'एतान्' प्रौढ़ब्राह्मण-षड्विंशयोरभिहितान् एकाहाहीनसत्रात्मकान् 'यज्ञक्रतून्' यज्ञकर्म्माणि 'प्रायच्छत्'। ते 'तैः' 'स्वर्गं' प्रापाः। सुबोध मन्यत् ॥

अथोक्तवेदनफल माह—स्वर्ग मिति। स्पष्टोऽर्थः ॥ (६)

সেই সৃষ্ট দেবগণ, সর্ব্বস্রষ্টা হিরণ্যগর্ভের মনঃস্বরূপ, প্রজাপতি নামক পিতার নিকটে গমন করিলেন। (তথায় গিয়া) তাঁহারা এইরূপ বলিলেন— কিরূপে আমরা স্বর্গলোক নিশ্চয় প্রাপ্ত হইব? প্রজাপতি সেই স্বর্গকাম দেবগণকে "এই সমস্ত কর্ম্মের অনুষ্ঠান দ্বারা স্বর্গে আগমন করিবা" এইরূপ আদেশপূর্ব্বক শ্রুতিবিহিত একাহ, অহীন, সত্রাত্মক বহুতর যাগকর্ম্ম প্রদান করিলেন। তদনন্তর দেবগণ সেই সমস্ত যাগের অনুষ্ঠান দ্বারা স্বর্গলোকে আগমন করিতে লাগিলেন। যে কোন ব্যক্তি ইহা অবগত হয়, সেই স্বর্গলোকে আগমন করে॥ (৬)

तेषा मह्नीयास्ताजाः पृश्नयो वैखानसा वसुरोचिषो ये चापूता ये च कामेप्सवस्ते ऽब्रुवन् कथं नु वयꣳ स्वर्गं लोक मियामेति तेभ्य एतत् स्वाध्यायाध्ययनं प्रायच्छत् तपश्चैताभ्याꣳ स्वर्गं लोक मेष्यथेति ताभ्याꣳ स्वर्गं लोक मायन्त्स्वर्गं लोक मेति य एवं वेद य एवं वेद (७) ॥ १ ॥

इदानीं यज्ञानधिकारिणां महाफलाय सामस्वाध्यायाध्ययनं तपश्च प्रायच्छदित्याह— तेषा मिति। 'तेषां' प्रजापतिसृष्टानां मध्ये के च देवव्यतिरिक्ताः खलु पृश्न्यादयः 'अह्नीयन्त' यागानधिकारेण स्वर्गफलहीना अभवन्। 'अजादयः' ऋषिगणाः, 'वैखानसाः' केचन व्रतसञ्ज्ञाका मन्त्रद्रष्टारः। तथा 'ये चापूताः' यागसाधनाध्ययनादिजन्यशुद्धिरहिताः। 'ये च कामेप्सवः' शुद्धा अपि तु ऐहिकफलैकतत्परा उक्तव्यतिरिक्ताः, यज्ञाधिकारेण हीना अभवन्, 'ते' सर्वे प्रजापतिम् 'कथम्' 'नु' इदानीं 'स्वर्गं मियामेत्यब्रुवन्'। स चोक्तः प्रजापतिः 'तेभ्यः' अजादिभ्यः 'स्वाध्यायाध्ययनं तपश्च' दत्त्वा 'एताभ्यां स्वर्गं लोक मेष्यथेति' अब्रवीत्। ते च 'ताभ्यां स्वर्गं लोक मायन्' ॥

• अथ वेदितुः फल माह—स्वर्गं मिति। स्पष्टार्थः। य एवं वेदेति खण्डसमाप्त्यर्थ मभ्यासः (७) ॥ १ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये
प्रथमः खण्डः ॥ १ ॥

প্রজাপতিসৃষ্ট পূর্ব্বোক্ত প্রাণিসমূহের মধ্যে অজবংশীয়গণ, পৃশ্নিবংশীয়গণ, বৈখানসবংশীয়গণ ও বসুরোচিঃ প্রভৃতি যাহারা অগ্নিহোত্রাদিযাগের পূর্ব্বকর্ত্তব্য পাবমানেষ্টির দ্বারা বিশুদ্ধ হয় নাই, অথচ নানা কামনার সিদ্ধির জন্য ব্যাকুল, তাহারা "আমরা কিরূপে স্বর্গ প্রাপ্ত হইব ?" প্রজাপতির নিকটে এইরূপ বলিল। অনন্তর প্রজাপতি, তাহাদিগকে এই উপায়দ্বয় অবলম্বন করিয়া স্বর্গলোকে আসিবা, এইরূপ কথনপূর্ব্বক তাহাদিগকে স্বাধ্যায়াধ্যয়ন * এবং কৃচ্ছ্রাদি তপস্যার † ব্যবস্থা প্রদান করিলেন। তাহারা প্রজাপতি দত্ত সেই উপায়দ্বয় অবলম্বন করিয়াই স্বর্গ লাভ করিয়াছে। যে কেহ এইরূপ তত্বত অবগত হয়, সেই স্বর্গ প্রাপ্ত হয় (৭) ॥ ১ ॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত, সামবিধান ব্রাহ্মণের প্রথমাধ্যায়-প্রথমখণ্ডের যথাক্ষর বঙ্গানুবাদ সমাপ্ত।

---

॥ অথ দ্বিতীয়ঃ খণ্ডঃ ॥

अथातस्त्रीन् कृच्छ्रान् व्याख्यास्यामः ( १ )

प्रथमखण्डे प्रजापतिः कृत्स्नं जगत्सृष्ट्वा तस्योपजीवनाय साम, स्वर्गप्राप्त्युपायत्वेन यत्नकृतं च प्रादात्। तत्र देवास्तथा स्वर्गमगमन्। तेषु मध्ये अजाः पृश्नय इत्यादीनां स्वर्गं प्राप्तु मशक्तानां स्वाध्यायाध्ययनं तपश्च प्रादादित्युक्तम् ( १५पृ० )। तत्र स्वाध्या-

* তৃতীয় খণ্ডাদিতে বিহিত, অগ্ন্যাধেয়াদির অঙ্গকল্প স.মত্রয়পাঠাদি।
† দ্বিতীয় খণ্ডে বিহিত, ত্রিবিধ তপস্যা।—কৃচ্ছ্র, অতি কৃচ্ছ্র ও কৃচ্ছ্রাতিকৃচ্ছ্র।

वाध्ययनम् उत्तरत्र विधास्यते ; इह तु तपो विधातुमादौ प्रतिजानीते—अथेति। अथशब्दोऽत्रानन्तर्ये वर्त्तते। 'अथ' अनन्तरम्। 'अतः' शब्दो हेतुवचनः। यतोऽजपस्त्रीणां यज्ञाद्यशक्तानाञ्च कृच्छ्रादिलक्षणतपोभिर्विना यज्ञाभावात् न स्वर्गप्राप्तिः, अतः इत्यर्थः। 'त्रीन्' कृच्छ्रातिकृच्छ्रकृच्छ्रातिकृच्छ्रभेदेन त्रिविधान् तपोविशेषान् 'व्याख्यास्यामः' विविच्य समस्तान्कथयिष्याम इत्येवं प्रतिज्ञा ॥ (१)

(১) অথ প্রাজাপত্যাদি ব্রতরূপ তপস্যার বিধি।

অনন্তর যেহেতু জ্যোতিষ্টোমাদি যজ্ঞানুষ্ঠানে অসমর্থ দ্বিজগণ স্বর্গলাভে বঞ্চিত হইতে পারে, এই নিমিত্ত (তাহাদের স্বর্গলাভার্থ) বিশেষরূপে ও সম্পূর্ণাবয়বে তপস্যার উপদেশ করিব। (১)

हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरं त्र्यहं नक्तं भुञ्जीताथापरं त्र्यहं न कञ्चन याचेदथापरं त्र्यहमुपवसेत् तिष्ठेदहनि रात्रावासीत क्षिप्रकामः सत्यं वदेदनार्यैर्न सम्भाषेत रौरवयौधाजये नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापोहिष्ठीयाभिरथोदकतर्पणं नमोऽहमाय मोहमाय मंहमाय धून्वते तापसाय पुनर्वसवे नमो नमो मौञ्ज्यायोर्म्याय सौम्याय शम्याय शिवाय नमो नमः पाराय सुपाराय महापाराय पारदाय पारविन्दाय नमो नमः पुरुषाय सुपुरुषाय महापुरु-

षाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नम इत्येतदेवादित्योपस्थानमेता आज्याहुतयो द्वादशरात्रस्यान्ते स्थालीपाकꣳ श्रपयित्वैताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्टकृत इत्यथो ब्राह्मणतर्पणम् ( २ )

अथ कृच्छ्रस्वरूपमत्रावद्विधत्ते— हविष्यानिति। 'तिस्रो रात्रीः' अत्र रात्रिशब्दस्तत्प्रतियोगिकमहर्लक्षयति, त्रीनहोरात्रानित्यर्थः। 'नाश्नीयात्' न भुञ्जीत ; त्रिष्वहोरात्रेषु भोजनं न कुर्यादित्यर्थः। किं कृत्वा ? 'प्रातराशान्' प्रातः-शब्दोऽत्राहर्लक्षकः। प्रातरश्यन्ते भुज्यन्ते इति प्रातराशाः, तादृशान्, 'हविष्यान्' हविषि योग्यान्, क्षारलवणादिवर्जितान् 'भुक्त्वा' दिनत्रयेऽहनि सकृदेव भुक्त्वा रात्रौ नाश्नीयादित्यर्थः।

एवं द्वादशरात्रिदिवससाध्ये कृच्छ्रव्रते प्रथमदिनत्रयं भुक्त्वा द्वितीयदिनत्रये नियमं विधत्ते— अथेति। 'अथ' प्रथमत्र्यहनियमानन्तरम् 'अपरं त्र्यहं' परेषु द्वितीयदिनत्रयेषु 'नक्तं' रात्रौ 'भुञ्जीत' अश्नीयात् ; हविरिति शेषः।

अथ तृतीयदिनत्रयनियमं विधत्ते— अथेति। 'अथ' द्वितीयत्र्यहानन्तरं तत्रत्यनियमानन्तरम् 'अपरं त्र्यहम्' अपरेषु तृतीयदिनत्रयेषु 'कञ्चन' कमप्यात्मीयं मन्यं वा पुरुषं भोजनार्थं 'न याचेत्' अयाचितं यद्यागच्छेत् तर्हि हविष्यं भुञ्जेदित्यर्थः।

अथ चतुर्थदिनत्रयनियमं विधत्ते— अथेति । 'अथ' अनन्तरम्, अपरेषु चतुर्थदिनत्रयेषु नाश्नीयादित्यर्थः ॥ एतत् कृच्छ्रस्वरूपम् ॥

तथाचास्योक्तं लक्षणम् ( म० सं० ११. २११. )—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहं मद्यादयाचितम्।

त्र्यहं परन्तु नाश्नीयात् प्राजापत्यञ्चरन् द्विजः"-इति ॥

अथ कृच्छ्रादिफलभूतशुचित्वे कृच्छ्रत्वं कामयमानस्य नियमविशेषं विधत्ते—तिष्ठेदिति। 'क्षिप्रकामः' विहितशुचित्वादि फलं शीघ्रं मे स्यादिति कामयमानः 'अहनि' दिवा 'तिष्ठेत्' उत्थितो भवेत् ; नासनशयनादि कुर्य्यादित्यर्थः। तथा 'रात्रौ' 'आसीत' उपविशेत्, शयनोत्थाने न कुर्य्यादित्यर्थः ॥

अथ कृच्छ्रादिकर्तुः सत्यं वदेदित्यारभ्य ब्राह्मणतर्पण मित्यन्तेन वाक्यजातेन व्रताङ्गभूतान्नियमविशेषानाह— सत्य मिति। व्रतकर्त्ता यदा वचनं ब्रूयात्तदा 'सत्यं' यथार्थ मेव ब्रूयात्, व्रतकाले नानृतं वदेदित्यर्थः ; "नानृतात्पातकङ्किञ्चित्"-इतिस्मृतावनृतस्यातिनिन्दितत्वात्। 'अनार्यैः' वेदशास्त्राधिकारिणो ब्राह्मणादित्रैवर्णिका आर्य्याः, तद्व्यतिरिक्ता अनार्य्याः; शूद्रपतितादयः ; तैः सह 'न सम्भाषेत' सत्य मनृतं वा न किञ्चित्सम्भाषणं कुर्य्यात्। 'रौरवयौधाजये' एतन्नामनी "पुनानः सोम धारया"-इत्यस्या मृच्युत्पन्ने द्वे सामनी *, ते 'नित्यम्' अनुदिनं 'प्रयुञ्जीत' त्रिवारं गानं यथा भवति तथा गायेदित्यर्थः। 'अनुसवनं' सवने सवने प्रातरादिषु त्रिषु सवनेष्वित्यर्थः †। 'आपोहिष्ठीयाभिः'

* छन्दआर्चिके ६. १. ३. १। गेयगाने १४. १. ३५, ३६।

† प्रातःसवनम्, माध्यन्दिनसवनम्, तृतीयसवनं चेति। छा० उप० ३, १६।

आपो हि ष्ठे तिशब्दयुक्ताभिस्तिसृभिर्ऋग्भिः 'उदकोपस्पर्शनं' जलावगाहनं स्नानं कुर्य्यादिति शेषः। 'अथ' उदकस्पर्शनानन्तरं वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः 'उदकतर्पणम्' उदकेन तर्पणं कुर्य्यात्।

तत्र प्रथममन्त्र माह— नमो ह्माायेति। यद्यप्यत्र देवताविशेषः स्पष्टो न प्रतीयते, तथाप्येतदादीनां चतुर्णां मन्त्राणां मैवोत्तरत्वादित्योपस्थाने अतिदिश्यमानत्वादेष्वप्यादित्याभिमानी परमेश्वरः प्रतिपाद्यत इति गम्यते। 'अहमाय' अह महङ्कारः, तेन माति निर्म्मीति कृत्स्नं जगदित्यहमः परमेश्वरः। अनुस्वाराभावश्छान्दसः। तस्मै 'नमः' करोमीति शेषः। यद्वा, "माङ् माने शब्दे च" *। अह मिति यः शब्द्यते सर्वैर्मनुष्यैरित्यहमः परमेश्वरः। अहंशब्दवाच्य इत्यर्थः। सर्वे हि जनाः कस्त्व मिति पृष्टा अह मह मिति स्व मात्मानं कथयन्ति, तादृशाय नमः। 'मोहमाय' मोहो वैचित्त्य मज्ञानं मातीति मोहमः, तस्मै नम इति सर्व्वत्रानुषज्यते। 'मंहमाय' मंहनीयं स्तुत्यं यथा भवति तथा कृत्स्नं निर्म्मातीति मंहमः। अथवा मंहतिर्दानकर्म्मा †। स्वभक्तेभ्यो दानं माति ददातीति मंहमस्तस्मै नमः। 'धून्वते' स्वभक्तानां धून्वन् परिहर्त्ता परमेश्वरस्तस्मै नमः। 'तापसाय' तापसवेषधराय नमः, तपस्विने इत्यर्थः। यद्वा, तप एव तापसः तपोरूपाय नम इत्यर्थः। 'पुनर्वसवे' पुनर्वासयति स्वरश्मिभिः कृत्स्नं जगदिति पुनर्वसुः सूर्य्यात्मा परमेश्वरस्तस्मै नमः।

अथ द्वितीयं मन्त्र माह— मौञ्जायेति। 'मौञ्जाय' मुञ्ज-

---

* जुहोत्यादिषु ६। "यो मिमीते च मीमांसां तदर्थ मनुतिष्ठति। पशवोऽपि न मीमन्ति यद्द्वेषी दुःखपीड़िताः ॥"—इति कविरहस्ये १८१।

† निघण्टौ ३. २१. १० ; निरुक्ते १. ३. २।



विकारो मीढ्वरस्तदर्हाय नमः। 'ऊर्म्याय' ऊर्मिरुदकम् आवर्तं जलावगाहन मित्यर्थः; तदर्हाय नमः। 'सौम्याय' अतिरमणीयाय नमः। 'शम्याय' शमीति कर्मनाम*, तदर्हाय नमः; सृष्ट्यादिव्यापारयोग्यायेत्यर्थः। 'शिवाय' मङ्गलस्वरूपिणे परमेश्वराय नमः।

अथ तृतीयं मन्त्र माह— पारायेति। 'पाराय' कर्मणां समापकाय नम इति। 'सुपाराय' सुष्ठु कर्मसमापकाय नमः। तथा 'महापाराय' अत्यन्त माधिक्येन कर्मसमापकाय नमः। सुमहच्छब्दयोः कर्मसमाप्तितारतम्यभेदेन भेदोऽवगन्तव्यः। यद्वा, पार मिति परतीर मुच्यते; संसाराब्धेः पारभूताय प्रपञ्चातीतस्वप्रतिष्ठितरूपायेत्यर्थः। अस्मिन्नप्यर्थे परतीरतारतम्यभेदेन सुमहच्छब्दयोर्भेदो द्रष्टव्यः। 'पारदाय' उक्तः पारशब्दार्थः, तस्य दात्रे नमः। 'पारविन्दाय' तथाविधस्य पारस्य लब्धवते नमः।

अथ चतुर्थं मन्त्र माह— पुरुषायेति। 'पुरुषाय' पुरि हृदयपुण्डरीके शेते इति वा पूर्णत्वाद्वा पुरुषः परमेश्वरस्तस्मै नमः। 'सुपुरुषाय' शोभनपुरुषाय नमः। 'महापुरुषाय' महांश्चासौ पुरुषो महापुरुषस्तस्मै नमः; स्तुत्यैर्गुणैः प्रशस्तायेत्यर्थः। 'मध्यमपुरुषाय' नमः। पुरुषस्त्रिविधः,—अवरमध्यमोत्तमभेदेन; अवरो मनुष्यादिः, मध्यमो देवादिः, उत्तमस्तत्कारणभूतः परमेश्वरः। तत्र पुरुष इत्यनेन मानुषादिरूपस्तस्मै नमः। 'उत्तमपुरुषाय' उक्तयोः कारणभूताय परमात्मने नमः। यद्वा, विराट्-हिरण्यगर्भ-परमात्मभेदेन पुरुषस्यावरमध्यमोत्तमत्व मवगन्तव्यम्। 'ब्रह्मचारिणे' नमः। सर्ववेदव्रतञ्चरतीति गच्छतीति ब्रह्मचारी,

* निघण्टौ २. १. २३, निरुक्ते ११. ३. ४।

তস্মৈ নমঃ; বেদাধিগম্যায়েত্যর্থঃ; "তং ত্বৌপনিষদং পুরুষং পৃচ্ছামি"-ইত্যাদিশ্রুতেঃ *। ভক্ত্যতিশয়দ্যোতনার্থঃ পুনর্নমঃ শব্দঃ। 'ইতি'-শব্দো মন্ত্রচতুষ্টয়সমাপ্তিদ্যোতনার্থঃ। তদেবং চতুর্ভির্মন্ত্রৈঃ সূর্য্যাভিমানী পরমেশ্বরঃ প্রতিপাদিতঃ ॥

উক্তমন্ত্রচতুষ্টয় মাদিত্যোপস্থানাজ্যহোমযোরস্যতিদিশতি—এতদেবেতি। উপস্থানশব্দস্য নপুংসকলিঙ্গত্বাত্তদপেক্ষয়া 'এতত্'-ইতি নপুংসকলিঙ্গত্বম্। আজ্যাহুতিশব্দস্য স্ত্রীলিঙ্গত্বাত্তদপেক্ষয়া 'এতাঃ'-ইতি স্ত্রীলিঙ্গতা। 'এতদেব' উক্তমন্ত্রচতুষ্টয়সাধন মেব 'আদিত্যোপস্থানম্' ব্রতাঙ্গসূর্য্যোপস্থানম্, কার্য্য মিতি-শেষঃ। 'এতাঃ' উক্তমন্ত্রসাধনাস্বতস্ত্রঃ 'আজ্যাহুতয়ঃ' কার্য্যাঃ। দ্বাদশেতি— 'দ্বাদশরাত্রস্য' কৃচ্ছ্রস্য 'অন্তে' অবসানে স্থাল্যাং পচ্যত ইতি স্থালীপাকশ্চরুঃ তং 'শ্রপয়িত্বা' হোমার্থং পক্ত্বা 'এতাভ্যো দেবতাভ্যঃ' বক্ষ্যমাণদেবতার্থং 'জুহুয়াত্' হোমং কুর্য্যাত্। এতাশ্চ ইতুয়ক্তা দেবতাঃ সমন্ত্রকা অভিহিতাঃ—'অগ্নয়ে স্বাহা, সোমায় স্বাহা'-ইত্যাদয়ঃ। প্রথমদ্বিতীয়মন্ত্রকৃতঃ স্বাহাশব্দ উত্তরত্র সর্ব্বত্রানুষজ্যতে। 'স্বাহা' এবম্ভূতাভ্যো দেবতাভ্যঃ সুষ্ঠু আহুত মস্তু। 'ইতি'-শব্দো মন্ত্রসমাপ্ত্যর্থঃ ॥

অথো ইতি। অথো শব্দ আনন্তর্য্যে বর্ত্ততে। 'অথো' তস্মাদনন্তর মুক্তহোমানন্তরং 'ব্রাহ্মণতর্পণম্' অন্নসুবর্ণাদিকেন ব্রাহ্মণানাং প্রীণনং কুর্য্যাদিতি শেষঃ ॥ (২)

প্রথম দিনত্রয় কেবল দিবসে একবারমাত্র হবিষ্য (ক্ষারলবণাদি বর্জ্জিত অন্নাদি) আহার করিবে; দিবারাত্রির মধ্যে পুনর্ব্বার আহার করিবে না। অনন্তর অপর দিনত্রয় কেবল রাত্রিকালে

* শতপথব্রাহ্মণে ১৪. ৬. ৫. ২৮। মুণ্ডকোপনিষদি ২. ২. ৩; মনুসংহিতায়াং ৬. ২৯।

একবারমাত্র হবিষ্যাহার করিবে। ষষ্ঠদিনানন্তর সপ্তমাদি দিনত্রয় কাহারও নিকটে আহারীয়দ্রব্য প্রার্থনা করিবে না (যদি কিছু অযাচিত লাভ হয়, তাহা ভোজন করিতে পারে)। নবম দিনের পর অপর দিনত্রয় উপবাস করিবে। আরও—যে কেহ শীঘ্র ফল কামনা করিবে, সে দিবাতে দণ্ডায়মান থাকিবে এবং সূর্য্যাস্তের পরে উপবেশন করিবে। এই তপস্যাকালে (বিশেষত) সতত সত্যভাষণ করিবে ও অনার্য্যজাতির সহিত সম্ভাষণ করিবে না এবং প্রতিদিন 'রৌরব' ও 'যৌধাজয়' নামক সামদ্বয় গান করিবে। আর প্রতিসবনে অর্থাৎ প্রাতর্মধ্যাহ্নসায়ংকালে 'আপোহিষ্ঠা' এই শব্দ যুক্ত ঋকৃত্রয় পাঠ সহ জলের দ্বারা যথাবিধি মার্জ্জন করিবে। এবং ঐরূপ মার্জ্জনের পরে প্রতিদিনই 'নমো হহমায়'—ইত্যাদি, 'মৌঞ্জ্যায়োর্ম্ম্যায়'—ইত্যাদি, 'পারায় সুপারায়'—ইত্যাদি ও 'পুরুষায় সুপুরুষায়'—ইত্যাদি চারি মন্ত্র পাঠ করত জলের দ্বারা পরমাত্মার তর্পণ করিবে। এই মন্ত্র-চতুষ্টয়ই কৃচ্ছ্রব্রতের অঙ্গীভূত আদিত্যোপস্থানের মন্ত্র। এবং এই চারি মন্ত্রই আজ্যাহুতি চতুষ্টয়ের মন্ত্র। এই দ্বাদশ দিনের পরে হোমার্থ স্থালীপাক (চরু) পাক করিয়া 'অগ্নয়ে স্বাহা' প্রভৃতি নয়টি মন্ত্রের দ্বারা ঐ ঐ মন্ত্রোক্ত দেবগণের উদ্দেশে অগ্নির মধ্যে সেই চরু হবন করিবে। তদনন্তর যথাসাধ্য অশনবসনাভরণ প্রদান দ্বারা ব্রাহ্মণদিগের প্রীতি সম্পাদন করিবে। (২)

**एतेनैवातिकृच्छ्रो व्याख्यातो यावत् सकृदाददीत तावदश्नीयात् (३)**

कृच्छ्रस्वरूपं विधाय तदेवातिकृच्छ्रेऽप्यतिदिशति—एतेनेति। "हविष्यान् प्रातराशान् भुक्त्वेत्यादि-ब्राह्मणतर्पण मित्यन्तेन वाक्य

ज्ञातेन यत् कृच्छ्रस्वरूप मुक्तम्; 'एतेनैव' एतादृक्कृच्छ्रस्वरूपेणैव 'अतिकृच्छ्रः' उक्तलक्षणकृच्छ्र मतीत्य वर्त्तमानस्तपोविशेषोऽतिकृच्छ्रः; स च 'व्याख्यातः' विशेषेण कथितः ॥

तत्र विशेष माह— यावदिति। अथ प्रथमत्र्यहे दिवा अश्नीयात्, द्वितीये नक्त मेव, तृतीये त्वयाचित मिति पूर्वोक्तम्; अत्र तु तेषु कालेषु 'यावत्'प्रमाण मशनीयं 'सकृत्' एकवारम् 'आददीत' स्वीकुर्याद्; दक्षिणेन पाणिनेति शेषः, 'तावत्' प्रमाण मेव 'अश्नीयात्' न पुनर्ग्रासनियमोऽयम्; सकृदात्तं यावद्ग्रो ग्रासेभ्यः पर्याप्तं तावतो ग्रासान् ग्रसेदित्यर्थः। शेषान् व्रतनियमान् पूर्ववदाचरेदिति॥ (३)

এই কৃচ্ছ্রব্রতের উপদেশেই অতিকৃচ্ছ্র ব্রতও প্রায় বর্ণিত হইয়াছে। ইহাতে একমাত্র ভোজন বিষয়ে বিশেষ নিয়ম এই— যে, যত পরিমাণ অন্ন একবার হস্তে গ্রহণ করিবে, সেই মাত্রই আহার করিবে অর্থাৎ পুনর্গ্রহণ করিবে না এবং গৃহীতও ত্যাগ করিবে না। (৩)

## अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः ( ४ )

अथ कृच्छ्रातिकृच्छ्रविशेष माह— अब्भक्ष इति। 'अब्भक्षः' आप एव भक्षो यस्य स तथोक्तः 'तृतीयः' कृच्छ्रादीनां त्रयाणां योऽवशिष्टसङ्ख्यापूरकः; 'सः' तादृशः 'कृच्छ्रातिकृच्छ्रः' कृच्छ्रमवलम्ब्यावस्थितत्वादेतन्नामको भवेत्। अस्मिन् कृच्छ्रातिकृच्छ्रे एतावान् तु विशेषः,— पूर्वोक्तप्रातरादिकालेष्वाप एव भक्ष्याः स्युरिति; इतरद् व्रतनियमं कृच्छ्रवदाचरेदित्यर्थः ॥ (४)

তৃতীয়টি জলমাত্র পান করিয়া নিষ্পন্ন করিতে হয়, অন্যান্য নিয়মাদি সমস্তই পূর্ব্ববৎ। উহা কৃচ্ছ্রাতিকৃচ্ছ্র নামে প্রসিদ্ধ। (৪)

**प्रथमं चरित्वा शुचिः पूतः कर्म्मण्यो भवति द्वितीयं चरित्वा यत् किञ्चिदन्यन् महापातकेभ्यः पापं कुरुते तस्मात् प्रमुच्यते तृतीयं चरित्वा सर्व्वस्मादेनसो मुच्यते (५)**

अथ तेषां त्रयाणां प्रत्येकं फलविशेष माह— प्रथम मिति। 'प्रथमं' पूर्व्वोक्तानां त्रयाणां मध्ये आदिमं कृच्छ्राख्यं तपोविशेषं 'चरित्वा', 'शुचिः' पापेभ्यः शुद्धः, अतएव 'पूतः' पावमानीकर्म्मार्हः, पावमानीं प्राप्तः सन् 'कर्म्मण्यः' यज्ञादिकर्म्मयोग्यो 'भवति'। तथा 'द्वितीयं' तेषां मध्ये द्वित्वसङ्ख्यापूरकं मतिकृच्छ्राख्यं तपोविशेषं 'चरित्वा', 'महापातकेभ्योऽन्यद्' अतिरक्तं 'यत्किञ्चित्' 'पापं कुरुते', 'तस्मात्' उपपातकपर्य्यन्तात्पापात् 'प्रमुच्यते' प्रकर्षेण मुच्यते। तथा 'तृतीयम्' उक्तानां मध्ये त्रित्वसङ्ख्यापूरकं कृच्छ्रातिकृच्छ्राख्यं 'चरित्वा', 'सर्वस्मात्', महापातकसहितात् अशेषाद् 'एनसः' पापात् 'मुच्यते' ॥ (५)

পূর্ব্বোক্ত কৃচ্ছ্রত্রয়ের মধ্যে কৃচ্ছ্র নামক প্রথম তপস্যার আচরণ করিয়া পাপবিনির্ম্মুক্ত, সুতরাং পবিত্র হইয়া যজ্ঞাদিকর্ম্মযোগ্য হইবে। অতিকৃচ্ছ্রনামক দ্বিতীয় তপস্যার আচরণ করিয়া মহাপাতক (গুরুদারগমনাদি) ভিন্ন যাহাকিছু (উপপাতক পর্য্যন্ত) পাপ থাকে, তৎসমস্ত হইতে মুক্তি লাভ করিবে। কৃচ্ছ্রাতিকৃচ্ছ্রনামক তৃতীয় তপস্যার আচরণ করিয়া মহাপাতক পর্য্যন্ত হইতে বিমুক্ত হইতে পারিবে। (৫)

अथैतांस्त्रीन् कृच्छ्रांश्चरित्वा सर्वेषु वेदेषु स्नातो भवति सर्वेषु देवेषु ज्ञातो भवति यश्चैवं वेद यश्चैवं वेद (६) ॥ २ ॥

अथ वेदितुः फल माह— सर्वेष्विति *। उक्तानुष्ठानापेक्षः 'च'-शब्दः। 'यः' पुमान् 'एवम्' उक्तप्रकारेण कृच्छ्रादिकं 'वेद' सम्यक् जानाति, "वेद मधीत्य स्नायात्"-इत्यादीनि यानि स्नानादिव्रताङ्गभूतानि वेदेषु सन्ति †, तैः सर्वैः एवंवित् 'स्नातो भवति' इत्यर्थः। किञ्च 'सर्वेषु देवेषु' इन्द्रादिषु 'ज्ञातो भवति'; सर्वे देवा एतत्तपःकर्त्ता महानित्यवगच्छन्तीत्यर्थः॥ (६)

द्विरुक्तिः खण्डसमाप्तिद्योतनार्था ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये
द्वितीयः खण्डः ॥ २ ॥

এই কৃচ্ছ্রত্রয় আচরণ করিয়া সমস্ত বেদের মধ্যে অবগাহন করা সম্পন্ন হয় এবং ইন্দ্রাদি সমস্ত দেবগণের বিদিত হয়। যে কেহ এইরূপ অবগত হয়, সেই এইরূপ ফল লাভ করিয়া থাকে (৬) ॥২॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত,
সামবিধান ব্রাহ্মণের প্রথমাধ্যায়-দ্বিতীয়খণ্ডের
যথাক্ষর বঙ্গানুবাদ সমাপ্ত।

---

"अथैतां८स्त्रीन् कृच्छ्रां८श्चरित्वा"—इत्येषोंऽशो न व्याख्यातः।

सर्वदर्शनसंग्रहे तु 'वेद मधीत्य स्नायादिति स्मृतिः'—इत्युक्तम् ( १२४.१. )।

॥ अथ तृतीयः खण्डः ॥

**अथातः स्वाध्यायाध्ययनस्य (१)**

द्वितीयखण्डे तपःस्वरूपं विधाय, तृतीये स्वाध्यायाध्ययनं विधातु मादौ प्रतिजानीते— अथात इति । 'अथ' तपोव्याख्यानानन्तरम्, यतः स्वाध्यायाध्ययनप्रभावेन स्वर्गप्राप्तिः, 'अतः', तत्तस्य 'स्वाध्यायाध्ययनस्य' साधारणान् धर्मान् व्याख्यास्याम इति शेषः ॥ ( १ )

( ১ ) অথ যাগানুকল্প-সামাধ্যয়নের বিধি ।

যেহেতু কৃচ্ছ্রাদি তপস্যাপূর্ব্বক যথাবিহিত স্বাধ্যায়াধ্যয়ন করিলে যথাযথ স্বর্গপ্রাপ্তি প্রভৃতি হইবে, অতএব উক্ত তপস্যাত্রয়ের উপদেশের পরেই স্বাধ্যায়াধ্যয়নের ব্যবস্থা বলা হইতেছে ॥ (১)

**काम मुक्त्वोपक्रमेदन्ते वा त्रीन् कृच्छ्रा१ंश्चरित्वा पूतो भवत्यग्निं प्रतिष्ठाप्याग्न्यभावे तूदक मादित्यं वोपसमाधाय दर्भानुपस्तीर्य दर्भेष्वासीनः प्राक्कूलेषूदक्कूलेषु वा दक्षिणेन पाणिना दर्भमुष्टिङ्गृहीत्वा प्रथमं त्रिवर्गं नवकृत्वो नवकृत्वो गायेदेव१ं सदा प्रयुञ्जानो ऽस्त्याधेय मवाप्नोति (२)**

अथ वक्ष्यमाणानां साधारणधर्म्म माह— काम मिति । उपक्रमात् पूर्वं 'कामं' कामनीयं फलं मेऽस्त्वित्युक्त्वा *· स्वाध्यायम्

* अस्मन्मते तु काम मुक्त्वेत्यस्यार्थः कामनीयत्वं कृत्वा, सङ्कल्पं कृत्वेति यावत ।

'उपक्रमेत्'; 'अन्ते' स्वाध्यायाध्ययनस्य समाप्तौ 'वा' कामं वदेत्। ओमिति। स्वाध्यायोपक्रमात् पूर्वं 'त्रीन् कृच्छ्रान्' पूर्वोक्तान् त्रिविधान् कृच्छ्रसंज्ञकान् तपोविशेषान् 'चरित्वा', 'पूतः' स्वाध्यायाध्ययनार्हो 'भवति'। अग्निमिति। कृच्छ्रानुष्ठानानन्तरं स्वाध्यायाध्ययनं कर्त्तु मिच्छन् पुरुषः 'अग्निं प्रतिष्ठाप्य' अग्निस्थापनं कृत्वा, तत्समीपे उपविश्येत्यर्थः। 'अग्न्यभावे तु' अग्निव्यतिरिक्ते प्रदेशे तु नदीपर्वतादिके 'उदकम् आदित्यं वा' 'उपसमाधाय' समीपे निधाय, तयोरन्यतरस्य समीपे उपविश्येत्यर्थः। 'दर्भान्' कुशान् 'उपस्तीर्य्य' भूमावास्तरणं कृत्वा, एवम्भूतेष्वास्तृतेषु 'दर्भेषु' 'आसीनः' प्राङ्मुख उपविष्टः स्वाध्याय मधीयीतेति शेषः। कीदृशेषु दर्भेषु? 'प्राक्कूलेषूदक्कूलेषु वा' प्रागग्रेषु उदगग्रेषु वा। किं कृत्वा? 'दक्षिणेन' हस्तेन 'दर्भमुष्टिं' मुष्टिपूरितदर्भान् 'गृहीत्वा' वक्ष्यमाणानि सामान्यधीयीतेति शेषः।

अथाध्ययनप्रकार माह— प्रथमन्त्रिवर्गमिति। 'प्रथमं' प्रथमायाम् "अग्न आयाहि वीतये"-इत्यस्या मृचुत्पन्नं 'त्रिवर्गं' वर्गः सामानि, सामत्रयं 'नवकृत्वो नवकृत्वः' वीप्सा सर्वार्था; सर्वाण्यपि सामानि प्रत्येकं नववारावृत्त्या गायेत्।

अथ प्रयोगेन प्राप्तव्यं फल माह— एवमिति। 'एवम्' उक्तनियमपूर्वकं प्रथमं त्रिवर्ग मित्युक्तप्रकारेण 'सदा' सर्वदा, विशेषाश्रवणान्नित्यानुष्ठानव्यतिरिक्ते काले एकस्मिन्नेवाहनि सततं 'प्रयुञ्जानः', 'अग्न्याधेयं' सम्भपार्थिवादिसम्भारानीय्याग्निम्मथित्वा त्रिष्वपि स्थानेषु अग्निस्थापनम्, तद् 'अवाप्नोति' तेन यत् फलं तत्प्राप्नोतीत्यर्थः। नन्वग्न्याधानस्य, सर्वक्रत्वर्थत्वान्न पृथक् फल मस्ति, अतः कथं तदवाप्तिफलाभिधानम्? इति, न वक्तव्यम्;

"যা গতির্যজ্ঞশীলানা মাহিতাগ্নেশ্চ সা গতিঃ"-ইত্যাদিনা যজ্ঞ-ব্যতিরিক্তেঽপি ফলশ্রবণাৎ। এব মুত্তরত্র পবমানাগ্নিহোত্রাগ্ন্যবাপ্তি-শ্রুতিনিষ্বপ্যবগন্তব্য' তত্তৎ ফল মস্তীতি মন্তব্যম্। অথবা যাধা-নাদীন্যেবাপ্নোতি ; তত্রাগ্নী তৎফলস্যাবশ্যকত্বাদ্,—বৈতানিকানা মগ্নিহোত্রাদিকর্ম্মণা মাধানপূর্ব্বকত্বাৎ প্রথমং তদবাপ্তেরভিধা-নম্ ॥ (২)

১—যাবজ্জীবন বা বৎসরৈক অধ্যেয় সামসমূহের বিধি। (অগ্ন্যাধান *) কামনা বলিয়া (অর্থাৎ সঙ্কল্প করিয়া) স্বাধ্যায়াধ্যয়ন আরম্ভ করিবে; অথবা অধ্যয়নের শেষেই কামনা বলিবে। প্রথমে পূর্ব্বোক্ত কৃচ্ছ্রসংজ্ঞক ত্রিবিধ তপস্যা অনুষ্ঠান করিয়া পবিত্র হইবে। তৎপরে অগ্নিস্থাপন করিয়া, অগ্নির অভাবে জল অথবা সূর্য্য-মাত্রকে সমীপে রাখিয়া (অর্থাৎ নদ্যাদি সমীপে জলমাত্র, অথবা গিরিগুহাদি জনশূন্য স্থানে সূর্য্যমাত্রকে সহায় করিয়া) পূর্ব্বাগ্র বা উত্তরাগ্র কতকগুলি কুশা পাতিয়া, সেই কুশাসনের উপরি, দক্ষিণ হস্তে একমুষ্টি কুশা, গ্রহণ সহ উপবিষ্ট হইবে। তদ-নন্তর প্রথম ত্রিবর্গ (অর্থাৎ বেদারম্ভের সামত্রয়) নয়বার নয়বার গান করিবে। সকল অনুকল্প-সামাধ্যয়নের পূর্ব্বেই এই নিয়মে প্রয়োগকারী ব্যক্তি, মন্থনপূর্ব্বক স্থানত্রয়ে অগ্নিস্থাপনের যে ফল, তাহাই প্রাপ্ত হইবে ॥ (২)

ইন্দ্রায় পবতে মদ ইতি পবমানহবীংষ্যেতেন কাল্পেন (৩)

অথ পবমানেষ্টিপ্রতিনিধিরূপ মধ্যয়নপ্রয়োগ মাহ—ইন্দ্রা-

* সকল যাগেই প্রায় প্রয়োজনীয়।

येति। 'एतेन' अग्निमप्रतिष्ठाप्य दर्भमुष्टिं गृहीत्वा इत्येतेन 'कल्पेन' 'इन्द्राय पवते मद इति' अस्या मुत्पन्नं साम प्रयुञ्जन् 'पवमानहवींषि' अवाप्नोति। 'यदग्नये पवमानाय', 'यदग्नये पावकाय', 'यदग्नये शुचये'-इति विहितास्तिस्र इष्टयः पवमान-हवींषि इत्युच्यन्ते। अथ कृताधानस्यैतेषु हविःष्वधिकारात् तत्प्रयोगानन्तरम् अपरस्मिन्नहनि एतत्कार्य्य मिति ज्ञायते। न चाधानपवमानेष्ट्योरग्नेर्योग्यतोत्पादानानुरूपकार्यैकत्वात् पृथक् सवनं हविराम्निवचनं न युक्तमिति वाच्यम्; आधानवत् पृथगे-वाग्निसंस्कारत्वात् ॥ (२) 

( পবমানেষ্টি * )

কথিত প্রকারে সংযত হইয়া 'ইন্দ্রায় পবতে মদঃ'—এই ঋঙ্মূলক সামত্রয় অধ্যয়ন করিলে 'যদগ্নয়ে পবমানায়', 'যদগ্নয়ে পাবকায়' 'যদগ্নয়ে শুচয়ে'—এই মন্ত্রত্রয়ে হবিত্রয় প্রদানের দ্বারা সম্পাদ্য পবমানেষ্টির যে ফল, তাহাই প্রাপ্ত হইবে ॥ (৩)

**सुवर्म्महाः सुवर्मया इत्येताभ्यां दर्शपूर्णमासा-वेतेनैव कल्पेन (४)**

अथ दर्शपूर्णमासार्थस्य स्वाध्यायप्रयोग माह—सुवर्म्महाइति। उक्ताभ्यां सामभ्याम् 'एतेनैव' उक्तेनैव 'कल्पेन' अधीयानः पुरुषो 'दर्शपूर्णमासौ' अवाप्नोति। अत्रोक्ते सामनी, उपरि वक्ष्यमाणाग्नि-ष्टोमाग्निहोत्रावाप्तिप्रयोगे विहिताभ्यां "यदिन्द्राहम्"-इत्येताभ्यां सह समुच्चीयेते; उभयावाप्त्योर्विधास्यमानत्वात्। "सुवर्म्महाः"

---

দর্শপূর্ণমাস ও অগ্নিহোত্রাদি করিতে হইলে প্রয়োজনীয়।

—इतीमं पौर्णमासे प्रयुञ्जीत, "सुवर्मयाः"–इतीमं दर्शे, इति तु तयोर्व्यवस्था ॥ (४)

(দর্শপৌর্ণমাস)

এই প্রকার নিয়মেই 'সুবর্ম্মহাঃ' ও 'সুবর্ম্ময়াঃ' এই সামদ্বয়ের যথাক্রমে* অধ্যয়ন দ্বারা দর্শপূর্ণমাস নামক যুগ্মযাগ সম্পন্ন করা হইবে † ॥ (৪)

भृत्यातिथिशेषभोजी काले दारानुपेयाद् यथाशक्ति चातिथिभ्यो दद्यादप्युदक मन्तत एवंव्रतो यदिन्द्राहं यथात्व मित्येते सदा प्रयुञ्जीत सुवर्महाः सुवर्मया इत्येते च पर्वणी तथा ह्यस्याग्निहोत्र मविलुप्तं सदा हुतं स-दर्शपूर्णमासं भवति (५)

अथ यावज्जीवाधिकाराग्निहोत्रं दर्शपूर्णमासं च उभय प्रयोग माह— भृतेरति। भृत्यशब्देनात्र भरणीया देवादय उच्यन्ते; अतिथयो नित्यं दूरादागताः। तेभ्यो दत्त्वा तत्प्रदानशेषभोजनशीलः सर्वदा स्याद्। अनेन पञ्चमहायज्ञशीलो भवेदित्युक्तम्भवति। तथा 'काले' प्राप्ते 'दारान्' भार्य्याम् 'उपेयात्' उपगच्छेत्। नियमविधिरयम्; अतः न भार्य्याव्यति-

* অর্থাৎ সুবর্ম্মহাঃ সামটি পূর্ণিমাতে এবং সুবর্ম্ময়াঃ সাম অমাবাস্যাতে।

† এস্থলে স্মর্ত্তব্য,—যাবজ্জীবন কর্ত্তব্য দর্শপূর্ণমাসের অনুকল্প অভীপ্সিত হইলে যাবজ্জীবনই পর্ব্বে পর্ব্বে যথাযথ এই সামদ্বয়ের পাঠ করিতে হইবে এবং যদি কাম্য দর্শপূর্ণমাস ঈপ্সিত হয়, তবে যেহেতু কাম্য দর্শপূর্ণমাস এক বৎসরমাত্র করিতে হয়, অতএব এ অনুকল্পও বৎসরৈকমাত্র কর্ত্তব্য হইবে।

विप्रप्रदेशे ;—तस्या मपि काले एवेति नियम्यते । 'यथा शक्ति चातिथिभ्यो दद्यात्' । उक्तस्याप्यस्य पुनर्विधान मत्यावश्यकत्वात् । 'अन्ततः' सर्वाभावे अन्तराहित्ये 'उदकम् अपि' वा दद्यात्; कदाचिदपि न प्रत्याचक्षीतेत्यर्थः । 'एवं-व्रतः' "यदिन्द्राहं यथात्वम्"–'इत्येते' सामनी 'सदा' अहरहः 'प्रयुञ्जीत' । तत्रापि नित्यकर्म्माविशिष्टे काले इत्युक्तम् । न केवले एते एव सामनी, किन्तु "सुवर्मद्दाः सुवर्मया:"–'इत्येते च' । पर्वशब्दश्रवणात् उक्ते सामनी दर्शपूर्णमासकाले एव प्रयोक्तव्ये, न पूर्वसामवदन्वहमित्यर्थः । 'तथा ह' । हेति चार्थे । तथा चानुष्ठिते सति 'अस्य' अनुष्ठातुः 'अग्निहोत्रम्' 'अविलुप्तं' लोपरहितम् । अतएव 'सदाहुत' सायम्प्रातःकाले अनुष्ठितम्भवति । केवल मुक्त मेवाग्निहोत्रं न, किन्तु 'दर्शपूर्णमास' दर्शपूर्णमास मग्निहोत्रं चोभय मपि सम्यगनुष्ठितं 'भवति' ।

अत्र यद्यपि कालेयत्ता न श्रूयते, तथापि भृत्यातिथिशेषभोजीत्यादिवाक्यपर्य्यालोचनायां सत्यां सर्वदा प्रयोक्तव्य मिति गम्यते, तथा कर्म्मान्ते ऽप्यग्निम्प्रतिष्ठाप्येत्येतेन * व्रतसमाप्तिश्च । एवं सति श्रुत्यन्तरे "संवत्सर मेतद्व्रतं चरेत्"–इति व्रतस्य संवत्सरेयत्तादर्शनादत्रापि तावत्काल मेतत्प्रयोक्तव्य मिति लभ्यते † ॥ (५)

---

* अनुपदवक्ष्यमाणेनेत्यर्थः ।

† एषोऽनुकल्पविधिस्तु नित्ययोः काम्ययोश्चोभयविधयोरेव अग्निहोत्रदर्शपूर्णमासयोः; तत्र काम्यपक्षे पूर्णे संवत्सरे वक्ष्यमाणानि कर्मान्तकर्माणि प्रयोक्तव्यानि भवन्तीत्येव । किञ्च अग्निहोत्रानुष्ठानफलमात्रकामानां पर्वणि पर्वणि पर्यायेण सुवर्मद्दाः सुवर्मया इत्येते सामनी नैव प्रयोक्तव्ये इति । अन्यच्च प्रतिदिनं प्रातः सायं चाग्निहोत्रकाले एव यदिन्द्राहमिति प्रयोक्तव्य मिति चास्मद्गुरूपदेशाः ।

( অগ্নিহোত্র এবং তৎসহ দর্শপূর্ণমাস )

ভরণীয়বর্গের এবং অতিথির ভোজনের পরে ভোজনকারী হইবে। ঋতুকালমাত্রে স্বীয়পত্নীতে সঙ্গত হইবে। গৃহাগত অতিথিদিগকে নিজ ক্ষমতানুসারে দান করিবে; যদি কিছুই দিবার ক্ষমতা না থাকে, তবে জলমাত্রও দিবে।০ এই প্রকার নিয়মে থাকিয়া 'যদিন্দ্রাহং যথা ত্বম্'—এই ঋঙ্মূলক সামদ্বয় প্রতিদিন সায়ং ও প্রাতঃকালে ( অগ্নিহোত্র হোমের সময়ে ) গান করিবে এবং পর্ব্বে পর্ব্বে ( অর্থাৎ প্রতি অমাবাস্যা ও পূর্ণিমায় ) যথাক্রমে 'সুবর্ম্মহাঃ', 'সুবর্ম্ময়াঃ' এই সামদ্বয় অধ্যয়ন করিবে। কথিত প্রকারে অনুষ্ঠানকারী যজমানের অগ্নিহোত্র যাগ লোপ-রহিত হইবে ( অর্থাৎ এইরূপ অনুষ্ঠানেই অগ্নিহোত্র সম্পন্ন হইবে,—ইহাতেই সায়ং-প্রাতঃকালে নিয়মিত হোম করা সম্পন্ন হইবে এবং সঙ্গে সঙ্গেই দর্শপূর্ণমাস যাগও সিদ্ধ হইবে) * ॥ (৫)

**কর্মান্তেঽগ্নিং প্রতিষ্ঠাপ্য ব্রীহিময়াংস্তণ্ডুলাংস্ত্রিঃ প্রক্ষাল্য জুহুয়াদগ্নয়ে স্বাহা সোমায় পবিত্রবতে বরুণায় ধন্বন্তরয়ে মনসা প্রাজাপত্যাং ব্রহ্মণেঽগ্নয়ে স্বিষ্টকৃত ইতি পশ্চাৎ (৬)**

**অথ পূর্ব্বোক্তাধ্যয়নানন্তরং কর্ত্তব্যং হোম মাহ— কর্মান্তে ইতি। 'কর্ম্মান্তে' উক্তকর্ম্মসর্ব্বানুষ্ঠানান্তে। ত্রিঃ স্বষ্টম্। পবিত্রবদ্‌গুণকায় 'সোমায়'। ধন্বন্তরিত্বগুণকায় 'বরুণায়'। ধন্ব**

---

* যিনি কেবল অগ্নিহোত্রের ফল কামনা করিবেন, তাঁহার 'যদিন্দ্রাহং যথা ত্বং' সামদ্বয়মাত্র পাঠ্য। এইরূপ কেবল 'সুবর্ম্মহাঃ' ও 'সুবর্ম্ময়াঃ' সামদ্বয় পাঠেই কেবল দর্শপূর্ণমাস সিদ্ধ হইবে।

मिमे इन्द्रो दत्वा 'द्वादशरात्र मुपवास उदके वासश्च'। 'वय' घ त्वा सुतावन्तः'—'इति द्वितीयम्'। स्पष्टार्थ मन्यत् ॥

अथान्यप्राणिवधे प्रायश्चित्त माह—अन्यदिति। अन्यप्राणीति गोव्यतिरिक्त मजादिक मुच्यते। स्पष्ट मन्यत् ॥ (২)

সোমযাজী ক্ষত্রিয় বা বৈশ্যকে হত করিয়া ব্রাহ্মণ-বধ নিয়মে (অর্থাৎ ব্রাহ্মণজাতির বধে যেরূপ নিয়ম বলা হইয়াছে (৬৪ পৃষ্ঠে), সেই নিয়মে 'শুদ্ধাশুদ্ধীয়' নামক দ্বিতীয় সাম জপ করিবে। শূদ্র-হননে দ্বাদশরাত্র উপবাস করত জলসমীপে বাস করিবে; এবং ঐ দ্বাদশদিন 'অয়ং ত ইন্দ্র সোমঃ' এই ঋকে গীত দ্বিতীয় সামটি গান করিবে। গো-হননে দ্বাদশরাত্র উপবাস করত জল সমীপে বাস করিবে; এবং ঐ দ্বাদশ দিন 'বয়ঞ্চ ত্বা সুতাবন্তঃ' এই ঋকে গীত দ্বিতীয় সাম গান করিবে। অন্য কোন প্রাণী বধ করিলে একরাত্র উপবাস করত 'অগ্নিস্তিগ্মেন' এই ঋকে গীত দ্বিতীয় সাম গান করিবে ॥(৩)

अवकीर्णी त्रीन् कृच्छ्रांश्चरन् परीतो षिञ्चता सुत मिति चतुर्थं मावर्त्तयेदेतेन कल्पेन परिवित्ता परिविन्दश्च सोमं राजानं वरुण मित्येतद्योनौ रेतः सिक्त्वाग्निर्मूर्द्धा घृतवतीद्वितीयं. यदिदमान्नो ममेति च शूद्रजीविकां से विलोपरम्य त्रीन् कृच्छ्रांश्चरंश्चक्र मित्येतद्गायेद् वैश्यजीविकायां वयः सुपर्णा इत्येतद्राजन्यजीविकायां पवस्वसोममधुमां ऋता-वेत्येतदभि त्वा शूर मिति वा सदा प्रयोगो ब्राह्मण

मनृत मभिशस्य तत्पापं प्रतिपद्यते गुह्यं प्रकाशय-न्नर्द्धभाग् भवत्यग्निस्तिग्मेनेति वर्गं प्रयुञ्जानस्तेन तत्तरति तेन तत्तरति (४) ॥ ७ ॥

अथावकीर्णिनः प्रायश्चित्त मुच्यते—अवकीर्णीति । यो ब्रह्म-चारी स्त्रिय मुपेयात् सोऽवकीर्णी। तस्य स्वरूपं शातु मन्यत्राह—

"स्खलितं व्रतिनां रेतो येन स्याद्ब्रह्मचारिणः ।

कामतो नामतः प्राहुरवकीर्णीति तं बुधाः ॥"-इति ।

स प्रथमोक्तान् (१६ पृ०) 'त्रीन् कृच्छ्रांश्चरन्' तेषु कालेषु 'परीतो षिञ्चता सुत मिति चतुर्थ मावर्त्तयेत्'-इति ॥

अथ परिवेत्तृपरिविन्दयोः प्रायश्चित्त माह— एतेनेति । अग्रजे अविवाहिते सति योऽनुजो जायां विन्दते, स परिवेत्ता ; तदग्रजः परिविन्दः। तावुभावपि 'एतेन' पूर्वोक्तेन 'कल्पेन' चरन्तौ सन्तौ 'सोमं राजान मित्येतत्' गायेताम् ॥

अथायोनौ रेतःसेके प्रायश्चित्त माह— अयोनाविति । 'अयोनौ' योनिव्यतिरिक्ते वा प्रदेशे 'रेतः', सेचयित्वा तत्प्राय-श्चित्ताय स्नात्वा 'अग्निर्मूर्द्धादीनि त्रीणि सामानि गायेत् ॥

अथ शूद्रोपजीवने प्रायश्चित्त माह— शूद्रजीविका मिति । शूद्रं प्रभुं सेवित्वा तद्दत्तेन धनेन यदुपजीवनम्, सा शूद्र-जीविका * ; तां 'सेवित्वा' प्राप्य, ततः कदाचिद् 'उपरम्य' कष्ट मित्युपरतो भूत्वा 'त्रीन्कृच्छ्रांश्चरन्' 'चक्र मित्येतत्साम गायेत्' ॥

अथ वैश्यक्षत्रिययोराह— वैश्येति । उभयत्रापि उपरम्य

---

* 'शूद्रजीविकाम्' शूद्रस्य विहितां जीविकां सेवादिका मित्यर्थः।

त्रीन् कृच्छ्रानितरेतरसमानम्। क्षत्रियविषये विकल्पः—'पवस्व सोमम्'-'अभि त्यं मेषम्'-इत्येतयोरन्यतरद् गायेदिति॥

अथ शूद्रादिजीविकासु कृच्छ्रत्रयं गानं च विहितम्, तस्य कः कालः? इति जिज्ञासाया माह—सदेति। चक्रादीनां साम्नां तत्प्रायश्चित्तकालेषु 'सदा' नित्यनैमित्तिकानुगुण्येन प्रयोगःकार्य्यः॥

अथ ब्राह्मणमिथ्याशस्तिगुह्यप्रकाशनयोः प्रायश्चित्तं विवक्षुस्तत्करणे दोषबाहुल्यं श्रावयति—ब्राह्मण मिति। 'ब्राह्मणम्' अनागसम् 'अनृतम्' अयथार्थम् 'अभिशस्य' ब्रह्महत्यादीनि समारोप्य शंसनं कृत्वा, तस्य यत्पाप मस्ति, स्वयं तद्भाग् भवति। तथा 'गुह्यम्' अन्यैरविदितं ब्राह्मणस्य पातकादिकं परेभ्यः 'प्रकाशयन्' तत्कृतस्य पापस्यार्द्धं स्वयं प्राप्नोति। एतदुभय मपि निन्दित मित्यर्थः। अथ तयोः प्रायश्चित्त माह— अग्निस्तिग्मेनेति। उक्तसामवर्ग मन्वहं 'प्रयुञ्जानः', 'तेन' प्रयोगेन 'तत्' निर्दिष्टं पापद्वयं 'तरति' अपापो भवति॥ अभ्यासः खण्डसमाप्त्यर्थः (৪)॥ ৩॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये
सप्तमः खण्डः॥ ৩॥

(অবকীর্ণ্যাদির প্রায়শ্চিত্ত)

অবকীর্ণী * ব্যক্তি কৃচ্ছ্রত্রয় (কৃচ্ছ্র, অতিকৃচ্ছ্র, কৃচ্ছ্রাতিকৃচ্ছ্র) আচরণ করত 'পরীতো ষিঞ্চতা সুতম্' এই ঋকে গীত চতুর্থ সামটি চার বার গান করিবে।

* যে ব্রহ্মচারীর স্ত্রীসংসর্গাদি দোষে ব্রত নষ্ট হয়, তাহাকে অবকর্ণী কহে।

পরিবেত্তা এবং পরিবিন্দ *, উভয়েএই নিয়মে 'গোষং রাজানং বরুণম্' এই ঋকে গীত সাম গান করিবে।

যোনি ভিন্ন প্রদেশে রেতঃ-সেক করিয়া "অগ্নির্মূর্দ্ধা' ঋকে গীত সাম, 'ঘৃতবতী' ঋকে গীত দ্বিতীয় সাম এবং 'যদিতস্তুস্বোমম' ঋকে গীত সাম, এইসামত্রয় গান করিবে।

শূদ্রজীবিকা সেবন (দাসত্ব) করিয়া তাহা হইতে উপরত হওত, কৃচ্ছ্রত্রয় আচরণ পূর্ব্বক 'চক্রং' এই ঋকে গীত সাম গান করিবে। বৈশ্যজীবিকা (কৃষ্যাদি) করিয়াও তাহা হইতে উপরত হইয়া কৃচ্ছ্রত্রয় করত 'বয়ঃ স্ুপর্ণা' ঋকে গীত সাম গান করিবে। রাজন্য-জীবিকা (শস্ত্রচালনাদি ব্যবসায়) করিয়াও তাহা হইতে উপরত হইয়া কৃচ্ছ্রত্রয় আচরণ করত 'পবস্ব সোম মধুমাঁ ঋতাবা' ঋকে গীত সাম অথবা 'অভি ত্যং' ঋকে গীত সাম গান করিবে। অবি-হিতজীবিকাবিষয়ক প্রায়শ্চিত্তগুলিতে ব্যবস্থাপিত গানগুলি, যাবৎ কাল কৃচ্ছ্র ত্রয় করিবে, তাবৎ নিত্য কার্য্যের অবিরোধে সর্ব্বদাই প্রয়োগ করিতে থাকিবে।

ব্রাহ্মণের প্রতি বৃথা দোষারোপ করিলে, সেই পাপ, সেই আরোপকারী প্রাপ্ত হইবে। ব্রাহ্মণের অপ্রকাশিত দোষ প্রকাশ করিলে, প্রকাশয়িতা সেই দোষের অর্দ্ধাংশভাগী হইবে। যথা-নিয়মে 'অগ্নিস্তিগ্মেন' এই ঋঙ্‌মূলক বর্গ (অর্থাৎ সামত্রয়) গান করিলে এই উভয় দোষ হইতে উত্তীর্ণ হইবে (৪) ॥ ৭ ॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত,
সামবিধান ব্রাহ্মণের প্রথমাধ্যায়-সপ্তমখণ্ডের
যথাক্ষর বঙ্গানুবাদ সমাপ্ত ॥

---

* অগ্রজ ভ্রাতার বিবাহের পূর্ব্বে বিবাহকারী অনুজকে পরিবেত্তা এবং ঐ অগ্রজকে পরিবিত্তি, পরিবিন্ন ও পরিবিন্দ কহে।

॥ अथ अष्टमः खण्डः ॥

रसान् विक्रीय कृच्छ्रं चरन् घृतवतीद्वितीय मुभयतो दत्वान्विक्रीय कृच्छ्रं चरन् को अद्य युङ्क्ते इत्येतत् तान् प्रतिगृह्यैतेनैव कल्पेन शम्पद मित्येत-दृदत्तां कन्यां प्रक्रम्य कृच्छ्रं चरन्नभ्रातृव्यो अनात्व मित्येतद्गायेत् तां प्रतिगृह्यैतेनैव कल्पेन शम्पद मित्येतदभ्युदितो भद्रो नो अग्निराहुत इत्येतद्गाये-दभ्यस्तमितो न तस्य मायया चनेति (१)

अथ रसविक्रये प्रायश्चित्त माह— रसानिति। 'रसान्' तैल-घृत-दध्यादीन् 'विक्रीय' विक्रयं कृत्वा 'कृच्छ्रं' प्राजापत्यं 'चरन्' 'घृतवती'-इत्येतस्य 'द्वितीयं' गायेत्।

अथाश्वादिविक्रये प्रायश्चित्त माह—उभयत इति। 'उभयतो दत्वान्' अश्वादीन् 'विक्रीय' 'कृच्छ्रं' पूर्वोक्तं प्राजापत्यं 'चरन्' तद्दिवसेषु 'को अद्य'-'इत्येतत्' साम गायेत्।

अथाश्वादिप्रतिग्रहे प्रायश्चित्त माह— तान् प्रतिगृह्येति। 'तान्' अश्वादीन् 'प्रतिगृह्य' 'एतेनैव कल्पेन' कृच्छ्रानुष्ठानपूर्वेण को अद्येत्येतस्य स्थाने 'शम्पद मित्येतद्' गायेत्। न चात्र प्रति-ग्रहशब्दो यावतोऽश्वान् प्रतिगृह्णीयादित्यत्रेव दानपर इति मन्त-व्यम्। तत्र "प्रजापतिर्वरुणायाश्व मनयत्। स स्वां देवता मार्छत्। स पर्यदीर्यत"-इतिवाक्यक्रमेण तथा निर्णीतम्; इह तु प्रसिद्धार्थपरित्यागे विरोधाभावात्।

अथादत्तकन्यापगमने प्रायश्चित्त माह— अदत्तां कन्या मिति।

পিত্রাদিনা 'অদত্তাং কন্যাং' 'প্রসহ্য' বিবাহং কৃত্বা, তৎপ্রায়শ্চিত্তার্থং 'কৃচ্ছ্রং' চরন্ 'অভ্রাতৃব্য ইত্যেতৎ' সাম গায়েৎ।

অথ তস্যা এব প্রতিগ্রহে প্রায়শ্চিত্ত মাহ— তাং প্রতিগৃহ্যেতি। 'তাম্' অদত্তাং পিত্রাদিনা অন্যেন প্রদত্তাং বা, বলাদাকৃষ্য তাং 'প্রতিগৃহ্য' ভার্যাত্বেন স্বীকৃত্য 'এতেন' পূর্বোক্তেন 'কল্পেন' কৃচ্ছ্রং চরন্ 'শম্পদ মিত্যেতদ্' গায়েৎ।

অথাভ্যুদিতাভ্যস্তমিতয়োঃ প্রায়শ্চিত্ত মাহ— অভ্যুদিত ইতি। যস্মিন্ সুপ্তে সূর্যো ঽভ্যুদেতি সো ঽভ্যুদিতঃ। যস্মিংশ্চ সুপ্তে সো ঽস্ত মিতি সো ঽভ্যস্তমিতঃ। তৌ যথাক্রমং সামনী গায়েতাম্। অত্রাপ্যভ্যস্তমিতঃ দশাবর মিতি সামান্যেনোক্তা ( ৫৪ পৃ০ ) আবৃত্তির্দ্রষ্টব্যা ॥ (১)

( রসবিক্রয়াদির প্রায়শ্চিত্ত )

তৈল, ঘৃত, দধি প্রভৃতি রস বস্তু বিক্রয়কারী প্রাজাপত্য ব্রত করত 'ঘৃতবতী' ঋকে গীত দ্বিতীয় সাম গান করিবে। যে সমস্ত প্রাণীর ঊর্দ্ধাধো উভয় ভাগে দন্ত উৎপন্ন হইয়া থাকে (মনুষ্যাদি), তাদৃশপ্রাণীর বিক্রয়কারীও প্রাজাপত্য ব্রত সহ 'কো অদ্য যুঙ্ক্তে' ঋকে গীত সাম গান করিবে। ঐরূপ প্রাণীর প্রতিগ্রহণেও ঐ নিয়মে 'শম্পদম্' ঋকে গীত সাম গান করিবে।

অদত্তা কন্যা বলপূর্ব্বক হরণ করিলে প্রজাপত্য ব্রত করত 'অভ্রাতৃব্যো অনা ত্বম্' এই ঋকে গীত সাম গান করিবে। দানাধিকারীর মতের বিরুদ্ধে অন্যদত্তা বা স্বয়ংবরা কন্যাকে বিবাহ করিয়াও ঐ নিয়মে 'শম্পদম্' ঋকে গীত সাম গান করিবে।

অভ্যুদিত * ব্যক্তি 'ভদ্রো নো অগ্নিরাহুতঃ' এই ঋকে গীত

* সূর্য্যোদয়ের পর পর্য্যন্ত শয়ান।

সাম গান করিবে। অভ্যস্তমিত * ব্যক্তি 'ন তস্য মায়য়াচন' ঋকে গীত সাম গান করিবে ॥ (১)

दुष्वःप्रेष्वद्य नो देव सवितरिति द्वितीय मन्त्रस्मिंᳫस्त्वनाम्नाते कयानाया द्वितीय मावर्त्तयेदग्निदग्धे घृताक्तान् यवाञ्जुहुयाज्ञातः परेण धर्मणेत्येतेनाग्नये स्वाहेति च मूषिकजग्धे तिलाञ्जुहुयान्न कि देवा इनीमसीतीन्द्राय स्वाहेति च कूर्चनाश एकरात्र मुपवसन्नग्निस्तिग्मेनेति द्वितीय मन्यस्मिंᳫस्त्वनाम्नाते यं वृचेष्विति द्वितीयम् मनुष्येष्वभिवातेषु घृताक्तानां यवाना माढ़कं जुहुयादग्ने त्वन्नो अन्तम इति चतुर्वर्गेण सामान्तेषु स्वाहाकारैरग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहेति च स्नेहवदमाᳫस मन्नं ब्राह्मणान् भोजयित्वा स्वस्ति वाचयित्वा स्वस्ति हैषां भवति गोष्वभिवातासु घृताक्तानां यवाना माढ़कं जुहुयादा को राजान मित्येतेन रुद्राय स्वाहेति च यावतीर्धूमः स्पृशति स्वस्ति हासां भवत्यश्वेष्वभिवातेषु घृताक्तानां यवाना माढ़कं जुहुयादश्वी रथी द्वितीयेनाश्विभ्याᳫ स्वाहेति च यावतो धूमः स्पृशति स्वस्ति हैषां भवति स्वस्ति हैषां भवति (२) ॥ ८ ॥

* সূর্য্যাস্তের পূর্ব্বেই শয়ান।

अथ दुःस्वप्नप्रायश्चित्तम्— दुःस्वप्नेष्विति । स्पष्टोऽर्थः ।

अथाक्षिस्पन्दनादिदुर्निमित्ते प्रायश्चित्त माह— अन्यस्मि-न्निति । 'अन्यस्मिन्' उक्तदुःस्वप्नाद्यतिरिक्तनानार्थसूचके अक्षि-स्पन्दनादौ 'अनाम्नाते' अविदितफलविशेषे सम्भाविते' सति 'कया-नाया द्वितीय मावर्त्तयेत्' । आवृत्तिविशेषयति— अवर मिति । त्रिरावृत्तिः जघन्या ; तत्तद्गौरवलाघवानुगुण्येन ततोऽप्यधिकं यथाशक्ति आवर्त्तयेदित्यर्थः ।

अथ गृहादिदाहे प्रायश्चित्त माह — अग्निदग्धे इति । गृहा-दावग्निना दग्धे सति 'जातः परेणेतेऽनेन', 'अग्नये स्वाहा इति च' 'घृताक्तान् यवान् जुहुयात्' ।

अथाग्निदाहादिना मूषिकदाहे प्रायश्चित्त माह— मूषिक-जग्धे इति । एतन्निगदेनैव सिद्धम् ।

अथ कूर्चनाशे प्रायश्चित्त माह— कूर्चनाशे इति । 'कूर्चनाशे' दर्भमयासनस्याग्निदाहादिना नाशे 'एकरात्र मुपवसन् अग्नि-स्तिग्मेनेति द्वितीयम्' आवर्त्तयेत् ।

अथोक्तव्यतिरिक्तगृहोपकरणनाशे प्रायश्चित्त माह— अन्य-स्मिन्निति । 'अन्यस्मिन्' कूर्चव्यतिरिक्तगृहोपकरणे 'अनाम्नाते' अज्ञातनाशकारणेन नष्टे सति, उक्तैकरात्रकल्पेन 'यं वृत्रेष्विति-द्वितीयम्' गायेत् ।

अथ पुत्रभृत्यादिमनुष्यपीड़ने प्रायश्चित्त माह— मनुष्येष्विति । 'चतुर्वर्गेण' ; सर्वान्ते स्वाहाकारैक्य माशङ्क्य तद्विशयति— 'सामान्तेषु स्वाहाकारैः'-इति ; प्रतिवर्गान्ते स्वाहाकारयुक्ते-नेत्यर्थः । 'अथ अग्नये स्वाहा'-इत्यादिभिश्चतुर्भिश्चतस्र आज्याहुतीः जुहुयात् । 'च'-शब्दश्चतुर्वर्गेण सह समुच्चयार्थः । 'स्नेहवत्' घृताद्यु-

पीतम्, 'अमांसं' मांसवर्जितम् 'अन्न' 'ब्राह्मणान्' अवरान् 'भोजयित्वा' तान् भुक्तवतः 'स्वस्ति वाचयित्वा'— अत्र श्रुतेर्ब्राह्मणभोजनस्य पूर्वकालत्वावगमात् पश्चात् उक्तहोम इति गम्यते। एवं कृते 'एषां' पुत्रादीनां 'स्वस्ति' अविनाशः क्षेम मिष्ट भवति।

अथ गवा मभिघाते प्रायश्चित्त माह—गोष्वभिघातास्विति। स्पष्टप्राय मेतत्। रुद्रस्य पशुपतित्वात् तदभिहत्यै रुद्रदेवताकमन्त्रत्वं युक्तम्। 'यावतोः' गाः होमार्थो 'धूमः स्पृशति', 'आसां' 'स्वस्ति भवति' एव। तथाच धूमः प्रवृद्धः कर्त्तव्य इत्यभिप्रायः।

अथाश्वाभिघाते प्रायश्चित्त माह— अश्वेष्विति। स्पष्टोऽर्थः। (२) ॥ ८ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये
अष्टमः खण्डः ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते
माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे प्रथमोऽध्यायः ॥ १ ॥

( দুঃস্বপ্নাদি দর্শনে প্রায়শ্চিত্ত )

দুঃস্বপ্ন দেখিলে 'অদ্য নো দেব সবিতঃ' ঋকে গীত দ্বিতীয় সাম গান করিবে। অন্য কোন অনিষ্ট সূচিত * হইলে 'কয়ানা' ঋকের দ্বিতীয় সাম গান করিবে।

* পুরুষের বাম-অক্ষি-স্পন্দনাদি।

গৃহাদি দগ্ধ হইলে 'জাতঃ পরেণ' ঋকে গীত সাম গান পূর্ব্বক 'অগ্নয়ে স্বাহা' মন্ত্রে কতকগুলি ঘৃতাক্ত যব হোম করিবে। ঐ গৃহে বা অন্য কোন রূপে মূষিক দগ্ধ হইলে 'নঁ কি দেবা ইনীমসি' ঋকে গীত সাম গান পূর্ব্বক 'ইন্দ্রায় স্বাহা মন্ত্রে' তিল হোম করিবে। ঐ গৃহে বা অন্য কোন রূপে কুশাসন দগ্ধ হইলে একরাত্র উপবাস করত 'অগ্নিস্তিগ্মেন' ঋকে গীত দ্বিতীয় সাম গান করিবে। দাহাদিতে অন্য কোন বস্তু বিনষ্ট হইলে 'যৎ বৃত্রেষু' ঋকে গীত দ্বিতীয় সাম গান করিবে। গৃহদাহে বা অন্য কোন প্রকারে পুত্র ভৃত্যাদি আত্ম-পরিজন আহত হইলে 'অগ্নে ত্বং নো অন্তম' এই ঋকে উৎপন্ন, শেষে 'স্বাহা'-পদযুক্ত, সামচতুষ্টয়ে ও 'অগ্নয়ে স্বাহা', 'বায়বে স্বাহা', 'সূর্য্যায় স্বাহা', 'চন্দ্রায় স্বাহা' এই মন্ত্রচতুষ্টয়ে এক আঢ়ক ঘৃতাক্ত যব হোম করিবে। অনন্তর ব্রাহ্মণগণকে মাংসভিন্ন স-রস অন্ন ভোজন করাইয়া স্বস্তিবাচন করাইবে। এরূপ অনুষ্ঠানে সেই পরিবারের কল্যাণ হইবে।

গাভীপাল আহত হইলে 'আ বো রাজানম্' ঋকে গীত সামের শেষে 'রুদ্রায় স্বাহা' এই মন্ত্র যোগ করিয়া তাহাদ্বারা এক আঢ়ক ঘৃতাক্ত যব হোম করিবে। ঐ হোমের ধূম যাবৎ গাভীকে স্পর্শ করিবে, তাহাদের সকলেরই মঙ্গল হইবে। অশ্ব আহত হইলে 'অশ্বী রথী' ঋকে গীত দ্বিতীয় সামের শেষে 'অশ্বিভ্যাং স্বাহা' এই মন্ত্র যোগ করিয়া তাহাদ্বারা এক আঢ়ক ঘৃতাক্ত যব হোম করিবে। ঐ হোমোত্থিত ধূম যাবৎ অশ্বকে স্পর্শ করিবে, তাহাদের সকলেরই মঙ্গল হইবে (২) ॥ ৮ ॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত, সামবিধান ব্রাহ্মণের প্রথমাধ্যায়-অষ্টমখণ্ডের যথাক্ষর বঙ্গানুবাদ সমাপ্ত ॥

## ॥ ইতি প্রথমঃ প্রপাঠকঃ ॥

---

## ॥ अथ द्वितीयः प्रपाठकः ॥

( तत्र )

### ॥ प्रथमः खण्डः ॥

—•❁•—

॥ ॐ३म् ॥

**अथातः काम्याना मनादेशे त्रिरात्र मुपवासः पुष्येणारम्भ आयुष्याण्येव प्रथमम् (१)**

यस्य निःश्वसितं वेदा यो वेदेभ्यो ऽखिलं जगत्।
निर्ममे, त मह वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

प्रथमाध्याये नित्यकर्माग्निहोत्राद्यर्थानि, प्रायश्चित्तार्थानि च सामाध्ययनानि बहुशुक्तानि; अथायुष्यादिकामार्थानि द्वितीये ऽभिधीयन्ते ।—

तत्र काम्यानि विधास्यामीति प्रतिजानीते— अथात इति। 'अथ' प्रायश्चित्तप्रयोगविधानानन्तरम्, 'अतः' यतः काम्यानां प्रयोगापेक्षा अतः 'काम्यानां' कमनीयानां आयुरादिफलानाम्, प्रयोगा उच्यन्त इति शेषः ॥

अथ सामान्य किञ्चित्परिभाष्यते— अनादेशइति। 'अनादेशे' कृच्छ्रचरित्वेत्यादिविशेषोपदेशरहिते प्रदेशे आदौ 'त्रिरात्र मुपवासः' कार्य्यः। पुष्येणारम्भइति। यत्काम्य मस्मिन् काले कर्त्तव्य मिति नोक्तं, तस्य सर्वस्य 'पुष्येण' पुष्यनक्षत्रेण युक्ते चन्द्रमसि 'आरम्भः' कर्त्तव्य इति ॥

अथ वक्ष्यमाणकाम्याना मायुष्याधीनत्वादायुष्याण्यध्ययनानि प्रथमं विधास्यामीति प्रतिजानीते— आयुष्याण्येवेति। यतः सर्वकामाना मायुष्यापेक्षास्ति, यतस्त्वायुष्यं सर्वैरप्याशास्यम्, अतः तानि आयुष्याणि आयुःसाधनान्यध्ययनानि 'एव' 'प्रथमम्', उच्यन्त इति शेषः॥ (१)

(৫) অথ কাম্য-সামাধ্যয়নের বিধি।

অনন্তর এই স্থল হইতে কাম্য কর্ম্ম সকলের অনুষ্ঠান বিহিত হইতেছে। যেস্থলে প্রকৃত কার্য্যের পূর্ব্বে শরীর শোধনার্থ কৃচ্ছ্রাদি ব্রত বিশেষরূপে শ্রুত না হইবে, তথায় সামান্যত ত্রিরাত্র উপবাস জানিতে হইবে। যে স্থলে প্রকৃত কার্য্যের আরম্ভ-কাল বিশেষরূপে শ্রুত না হইবে, তথায় সামান্যত পুষ্যা নক্ষত্র জানিতে হইবে। যতগুলি কাম্য সামাধ্যয়ন আছে, তাহার মধ্যে আয়ুঃ-সাধন সাম-গুলিই প্রথমে বিধান করা যাইতেছে॥ (১)

अबोध्यग्निर्महित्रीणा मिति द्वे त्वावत पुरूद्वं नरो ग्रामे गेय मायुरिति चास्य निधनं कुर्य्यात् त्यमूषु द्वे त्रातार मिन्द्रᳪ हविरित्येतस्य स्थाने स्वस्ति न इति सोमः पुनान्यᳪ ससु प्रथमं विश्वतो दाव-न्निति पूर्वᳪ 'रहस्य उदुत्तम" वरुण पाश मित्येषो ऽरिष्टवर्ग एतेषा मेक मनेकं वा सर्वाणि वा प्रयुञ्जानः शतं वर्षाणि जीवति जरयैव विस्रᳪसते (२)

अथायुःसाधन प्रयोग माह— अबोध्यग्निरिति। स्पष्टोऽर्थः॥ (२)

( অরিষ্ট বর্গ )

যে পূর্ণায়ুঃ কামনা করিবে, সে 'অবোধ্যগ্নিঃ' ঋকে গীত সাম, 'মহিত্রীণাম্' এই ঋকে গীত সামদ্বয়, 'ত্বাবতঃ' ঋকে গীত সাম, 'গ্রামে গেয় ও পঞ্চমাংশে আয়ুঃশব্দাদি বিশিষ্ট 'ইন্দ্রদ্যুম্নরঃ' ঋকে গীত সাম, 'ত্যমূষু' ঋকে গীত সামদ্বয়, 'হবিঃ' পদের পরিবর্ত্তে 'স্বস্তি নঃ' পদদ্বয় যোগ করত 'ত্রাতারমিন্দ্রং' ঋকের সাম, 'সোমঃপুনা' ঋকে গীত শেষ সাম, 'সস্নু' ঋকে গীত প্রথম সাম, 'বিশ্বতোদাবন্' ঋকে গীত অরণ্য গানে শ্রুত প্রথম সাম, 'উদুত্তমং বরুণ পাশম্' ঋকে গীত সাম ;—এই সামসমূহকে অরিষ্টবর্গ কহে। ( যথাশক্তি ) ইহার একটি অথবা কয়েকটি কিংবা সকলগুলি প্রয়োগ করিতে থাকিলে পূর্ণ শতাব্দ জীবিত থাকিবে, এবং জরাকর্ত্তৃক পরিত্যক্ত হইবে ( অর্থাৎ জরাজীর্ণ হইবে না ) ॥ (২)

**भ्राजाभ्राजे शुक्रचन्द्रे राजनरौहिणाके शुक्रियाद्ये हाउस्वरतादीनि चत्वारि सेतुसाम चैषः पवित्रवर्ग एतेषा मेक मनेकं वा सर्वाणि वा प्रयुञ्जानः पूतो भवति बहु प्रतिगृह्य याजयित्वा वाऽऽसन्न मात्मानं मन्यमानो गोषूक्ताश्वसूक्ते शुद्धाशुद्धीये तरत्स मन्दीत्येतानि प्रयुञ्जानः पूतो भवति (३)**

अथ शुद्धिक्रियायाः प्रयोग माह— भ्राजेति। भ्राजादीनि सामानि स्पष्टानि। 'एषः' उक्तप्रतीकसमुदायात्मकः 'पवित्रवर्गः' सर्वपापप्रोधध्वंसामसमूह इत्यर्थः। 'एतेषां' साम्नां मध्ये 'एकम्', 'अनेकं वा' द्वे त्रीणीत्यादि यथाशक्ति वा, 'सर्वाणि वा' विहितानि सर्वाण्यपि वा; एतेषु त्रिषु पक्षेषु एक मिच्छया

सदा 'प्रयुञ्जानः' 'पूतो भवति' दैनन्दिनसमुद्भवैः पापैः पूतो भवतीत्यर्थः ॥

अथ बहुविधप्रतिग्रहबहुयाजनविषयकशुद्धिकामस्य प्रयोग माह— बह्विति। अप्रतिग्राह्यप्रतिग्रहे अयाज्ययाजने च प्रायश्चित्तस्योक्तत्वादस्य काम्यप्रकरणत्वाच्च प्रतिग्राह्यस्यैव धनं स्वकुटुम्बभरणापेक्षया अधिकम्प्रतिगृह्य याज्यान्येव बहून् याजयित्वाऽवासन्नं स्वभ्रूतानपगमेनोपक्षीण मात्मानं मन्यमानो गोषूक्तादीन्येतानि सामानि प्रयुञ्जानः पूतो भवति ॥ (३)

( পবিত্র বর্গ )

যে ব্যক্তি সতত পবিত্র থাকিতে অভিলাষ করিবে, সে অরণ্যগানে পঠিত 'ভ্রাজা' ও 'আভ্রাজ' সাম, 'শুক্র' ও 'চন্দ্র' সাম, 'রাজন' ও 'রৌহিণ' সাম, শুক্রিয়াদ্য সামদ্বয় ( অগ্নের্ব্রত ও বায়োর্ব্রত ), 'হাউস্বরতা' প্রভৃতি সামচতুষ্টয় এবং 'সেতু সাম' ;—এই সামসমূহকে পবিত্র বর্গ কহে। (যথাশক্তি ) ইহার একটি, অথবা কয়েকটি, কিংবা সকলগুলি, প্রয়োগ করিতে থাকিলেই সতত পবিত্র থাকিবে।

অকালে বিপন্ন হইয়া বা বহু পরিবার পোষণার্থ বহু প্রতিগ্রহ করিয়া অথবা বহুতর যাজন করিয়া আপনাকে অপবিত্র জ্ঞান করিলে গোষূক্ত, অশ্বসূক্ত, শুদ্ধাশুদ্ধীয় নামক সামদ্বয় ও 'তরৎ স মন্দী' সাম ;—এইগুলি প্রয়োগ করিয়া পবিত্র হইবে* ॥ (৩)

* অযাজ্য-যাজনাদির 'প্রায়শ্চিত্ত পূর্ব্বে বলা হইয়াছে ; পরন্তু যেরূপ অবস্থায় অযাজ্য-যাজনাদি পাপের নিমিত্ত না হইবে, তাদৃশস্থলেও মনঃশুদ্ধি না হইলে পবিত্র হইবার জন্য এই ব্যবস্থা হইল।

तवश्यावीयं प्रयुञ्जानः शुचिः पूतो ब्रह्मलोक मभिसम्पद्यते न च पुनरावर्त्तते (४)

अथ ब्रह्मलोकप्राप्तिसाधनशुद्धिकामस्य प्रयोग माह— तवश्यावीय मिति। तवश्याव इत्यस्या मुत्पन्नं 'तवश्यावीयं' तन्नाम सदा 'प्रयुञ्जानः', 'शुचिः पूतः' सन् 'ब्रह्मलोकं' ब्रह्मणश्चतुर्मुखस्य लोक्यत इति लोकः साम्यम् 'अभिसम्पद्यते' आभिमुख्येन प्राप्नोति। यद्यपि शुचिपूतशब्दयोरैकार्थ्यम्, तथापि पुरुषसंस्कारस्य मलापगमगुणाधानरूपेण द्वैविध्यम् ;— शुचिरित्यनेन पापापगमः, पूत-इत्यनेन सुकृतप्राप्तिलक्षणगुणाधान मित्यपौनरुक्त्य मुच्यते। न च "कर्म्मणा पितृलोको विद्यया देवलोकः"-इति श्रुतौ व्यवस्थितत्वात् सामाध्ययनलक्षणस्य कर्म्मणो विद्यात्वाभावात् कथं देवलोक-प्राप्तिसाधनत्व मिति वाच्यम् ; अध्ययनेन हि चित्तशुद्धौ सत्यां सगुणोपासनद्वारा ब्रह्मलोकस्य प्राप्तुं शक्यत्वादस्य तत्साधनत्वम्। अथवा "कर्म्मणा पितृलोकः"-इतिवदस्यापि वचनत्वाविशेषात् साक्षात्साधनत्वं न विरुध्यते ; "किं वचनं न कुर्य्यान्नास्ति वचनस्यातिभारः"—इति हि न्यायः। 'न च पुनरावर्त्तते'-इति ब्रह्मलोकं प्राप्तवतां "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"-इति कालात्मायुज्यमुक्तिविधानादपुनरावृत्तिः ॥ (४)

যে ব্রহ্মলোক গমনে অভিলাষ করিবে, সে 'তবশ্যাবীয়ং' নামক সাম প্রয়োগ করিয়া শুচি ও পবিত্র হইয়া ব্রহ্মলোকে গমন করিবে, —তথা হইতে পুনরাবৃত্ত হইবে না ॥ (৪)

उदुत्तमं वरुण पाश मित्येतत् सदा प्रयुञ्जानः सम्बाधं न निगच्छति निगतश्च प्रमुच्यते गौरान्त्सर्षपां स्तुचे तुनाय तत् सु न इत्येतेन प्राश्नीयाद् दीर्घायुर्भवति त्रीन्वोदकाञ्जलीन् सदा ऽऽचामेत् पिबा सोम मिन्द्र मन्दतु त्वेताभ्यां दीर्घायुर्भवति दीर्घायुर्भवति (५) ॥ १ ॥

अथारोग्यकामस्य प्रयोग माह— उदुत्तम मिति। 'उदुत्तमम्' -'इत्येतत्' 'सदा' नित्यकर्म्माविरोधेन 'प्रयुञ्जानः' 'सम्बाधं' व्याध्यादिपीड़ां 'न निगच्छति' न कदाचिदपि प्राप्नोति; 'निगतश्च प्रमुच्यते' नितरां सम्बाधं प्राप्तस्तेनेन प्रयोगेन तस्मात् प्रमुच्यते ॥

अथ दीर्घायुष्कामस्य प्रयोग माह— गौरानिति। 'स्तुचे तुना'-इत्येतत्साम्ना 'गौरान् सर्षपान्' अभिमन्त्र्य अन्वहं 'प्राश्नीयात्' एतेन 'दीर्घायुः' शतवर्षजीवी भवति। अत्रैव प्रयोगान्तर माह— त्रीन्वोदकाञ्जलीनिति। 'सदा' अन्वह मित्यर्थः। 'पिबा सोम मित्येताभ्यां' 'त्रीन् वा उदकाञ्जलीन्' 'अभिमन्त्र्य आचामेत्' पिबेत्। शिष्ट मुक्तप्रायम् (५) ॥ १ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥

(আরোগ্য বর্গ)

যে আরোগ্য কামনা করিবে, সে 'উদুত্তমং বরুণ পাশম্' এই সামটি সতত প্রয়োগ করিলে কখনও ব্যাধি-পীড়া ভোগ করিবে

না। এবং যদি পীড়িত হইয়া ইহা জপ করে, সে পীড়া হইতে মুক্ত হইবে। যে দীর্ঘায়ু হইতে কামনা করিবে, সে প্রতিদিন 'তুচে তুনা' এই সাম গান পূর্ব্বক কতিপয় শ্বেতসর্ষপ ভক্ষণ করিবে; এরূপ করিলে দীর্ঘায়ু হইবে,—শতবর্ষ জীবন লাভ করিবে। অথবা 'পিবা সোম' মিন্দ্র মন্দতু ত্বা' এই সাম গান পূর্ব্বক সতত উদকাঞ্জলিত্রয় আচমন করিবে;—ইহাতেও দীর্ঘায়ু হইবে (৫) ॥ ১ ॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত,
সামবিধান ব্রাহ্মণের দ্বিতীয়াধ্যায়-প্রথমখণ্ডের
যথাক্ষর বঙ্গানুবাদ সমাপ্ত ॥

---

॥ অথ দ্বিতীয়ঃ খণ্ডঃ ॥

অথ যস্যাজাতানি প্রমীয়েরন্ ন্যগ্রোধশুঙ্গাꣳ-শরমূলং চোত্থাপ্য তদ্দৃহস্থিত্রিবৃতং কারয়েন্মণি মগ্নিং প্রতিষ্ঠাপ্যাবৃতা হুত্বা মণিং নিধায়াবোধ্যগ্নিরিত্যে-তেনাভিজুহুয়াৎ সহস্রকৃত্বঃ শতাবরং তৃতীয়ে গর্ভ-মাসি নিদধ্যাদাজ্যশেষম্ মেখলায়াং মণিং ধার-য়েৎ পুমাꣳসꣳ হ জনয়তি জাতস্য কণ্ঠেঽবসজেৎ কুমার মাজ্যশেষং প্রাশয়েৎ সর্ব্বাণি স্রোতাꣳসি তর্পয়েতদ্ভ্যস্তীতাহরহস্তত জন্তু মুপযুঙ্‌ক্তে পুনঃ প্রয়োগঃ শতং বর্ষাণি জীবতি জরয়ৈব বিস্রꣳসতেঽথ

यो रक्षसा गृहीतः स्यादशनिहतस्य वृक्षस्येध्मः, शुक्लाया गोः सरूपवत्साया अन्यस्या वा ऽऽज्यं बैल्वं मणि मुत्थाप्य तदहस्त्रिवृतं कारयेन्मणि मग्निं प्रतिष्ठाप्या-वृता हुत्वा मणिं निधायेन्द्र स्त्रिधातु शरण मित्येते-नाभिजुहुयात् सहस्रकृत्वः शतावरं तं मणिं कण्ठेन शिरसा वा धारयन् मुच्यते रक्षसा यद्वाउ विश्पति-रिति चैतत् सदा प्रयुञ्जीत स्वस्ति ह्यस्य भवति (१)

अथोत्पन्नपुत्राणा ममरणं कामयमानस्य प्रयोग माह— अथ यस्या इति । 'अथ' शब्दोऽर्थान्तरसंग्रहार्थः । 'यस्याः' नार्याः 'जातानि' उत्पन्नान्यपत्यानि 'प्रमीयेरन्' मृतानि भवन्ति, तस्याः 'तृतीये गर्भमासि' इति सम्बन्धः । 'न्यग्रोधशुङ्गान्' वटशाखाग्र-मुकुलान्, 'शरमूलं' शरदण्डसाधनतृणस्य मूलम् 'च' 'उत्थाप्य' 'तदहः' तस्मिन् दिवसे प्रयोगदिवसे उक्तद्रव्ये पिष्ट्वा ताभ्यां 'त्रिवृतं' त्रिपर्वाणं 'मणिं' कारयेत् । अथ 'अग्निं प्रतिष्ठाप्य', 'आवृता' प्रकारेण 'हुत्वा' व्याहृतिपर्यन्तम्, 'मणिम्' अग्नेः पश्चा-द्देशे 'निधाय' 'अबोध्यग्निरित्येतेन' मन्त्रेणाग्नौ 'अभिजुहुयात्' । 'सहस्रकृत्वः' परमावधिः ; 'शतावरं' शतकृत्वोऽवरम् । तदा तदोत्तमावारं सम्पातैन मणौ जुहुयात् । एतत् 'तृतीये गर्भमासि' 'आज्यशेषं' हुतशिष्ट माज्यम् अवशेष्य वक्ष्यमाणप्रयोगार्थं 'निद-ध्यात्' सरक्षं स्थापयेत् । 'सा' नारी तं हुतं त्रिवृतं मणिं 'मेखलायां धारयेत्' । एवं कृते सा 'पुमांसं' पुत्रं 'जनयति' । मेखलायां प्रोतं मणिं तस्य 'जातस्य कण्ठे' 'अवसजेत्' बध्नो-

यात्। तत् 'आज्यशेषं कुमारं प्राशयेत्'। तथा 'सर्वाणि स्रोतांसि' नासिकाश्रोत्रादीनि 'तर्पयेत्' तेनैवाज्येन प्रीणयेत्। 'तत ऊर्द्धम्' एव मेव 'अहरहः' त माज्यशेषेण 'अभ्यञ्जीत'। 'उपयुङ्क्ते' तस्मिन्नाज्यशेषे होमस्य 'पुनः प्रयोगः' कार्य्यः,—सहस्रकृत्वः सम्पातेन मणि मभि हुत्वा पुनः शेषं सम्पादयेत्। एवं कृते उत्पन्नः पुत्रः 'शतं वर्षाणि जीवति'। तदेवाह— 'जरयैव विस्रंसते'-इति,—न मध्येऽस्य विस्रंसो भवति ॥

अथ रक्षोगृहीतस्य प्रयोग माह— अथ यो रक्षसेति। 'अथ' शब्दः पूर्ववत्। 'यः' 'रक्षसा' रक्षःप्रभृतिभिः 'गृहीतः' 'स्यात्', तस्य प्रयोगो वक्ष्यत इति शेषः। तस्मिन् प्रयोगे अग्निसमिन्धनाय 'अशनिहतस्य वृक्षस्य' सम्बन्धी 'इध्मः' कार्य्यः। होमार्थं 'शुक्लायाः' शुक्लवर्णायाः 'सरूपवत्सायाः' शुक्लवर्णवत्सोपेतायाः 'गोः' सम्बन्धि 'आज्यं' कार्यम्। उक्तलक्षणाया अलाभे 'अन्यस्याः' असरूपवत्सायाः अशुक्लायाश्च गोः सम्बन्धि 'वा' कार्य्यम्। 'तदहः' तस्मिन् प्रयोगदिने 'बैल्वं' बिल्ववृक्षसम्भवं 'मणिं' तक्षणादिना 'उत्पाद्य' सम्पाद्य तं 'त्रिवृतं कारयेत्' त्रिपर्वाणं कुर्य्यात्। मणि मग्नि मित्यवशिष्टं पूर्ववत्। अत्र व्रते होममन्त्रः— 'इन्द्र त्रिधातु शरणम्'-इति। 'यद्वाउ विश्पतिः'-इत्येतत्साम 'सदा' सर्वदा 'प्रयुञ्जीत'। एवं कृते रक्ष-आदिभिर्मुच्यते। 'अस्य' 'स्वस्ति' अविनाशः क्षेमं 'भवति' ॥ (१)

( মৃতবৎসাদির প্রয়োগ )

যে নারীর সন্তান হইয়া হইয়াই মৃত হয়, তাহার গর্ভ হইলে ৩য় মাসে, কয়েকটী বটের পাতার মুকুল এবং শরের মূল তুলিয়া

সেই দিবসেই পেষণ করিয়া ত্রিপর্ব্বা মণির আকার করিবে। অনন্তর অগ্নি স্থাপন পূর্ব্বক আবৃত-প্রকারে ব্যাহৃতি হোম করিয়া পরে অগ্নির পশ্চাদ্ভাগে ঐ মণি রাখিয়া 'অবোধ্যগ্নিঃ' সামে অন্যূন এক শত, সহস্রাবধি আহুতি প্রদান করিবে। এই হুতাবশিষ্ট ঘৃত উত্তর কালের জন্য তুলিয়া রাখিবে এবং ঐ ত্রিপর্ব্বা মণিটী উহার কটিভূষণের মধ্যে গ্রথিত করিয়া সেই তৃতীয় মাসেই ধারণ করা-ইবে! এরূপ করিলে সেই নারী, কালে পুত্র-সন্তান প্রসব করিবে। অনন্তর ঐ নবপ্রসূত সন্তানের কণ্ঠে ঐ মণি যত্নে ধারণ করাইবে, এবং পূর্ব্বরক্ষিত সেই হুতশেষ ঘৃত ঐ পুত্রকে কিঞ্চিৎ লেহন করা-ইবে,—কিঞ্চিৎ কিঞ্চিৎ শ্রোত্রাদি ইন্দ্রিয়সকলে স্পর্শও করাইবে। আরও তদবধি প্রতিদিনই ঐ হুতাবশিষ্ট ঘৃত সেই নবকুমারের অঙ্গে অভ্যঞ্জন করিবে। ঐ ঘৃত নিঃশেষিত হইলে পুনর্ব্বার ঐরূপ প্রয়োগ পূর্ব্বক ঘৃত প্রস্তুত করিবে। এ সন্তান, পূর্ণ-শতবর্ষ জীবিত থাকিবে,—জরা কর্ত্তৃক পরিত্যক্ত হইবে ( অর্থাৎ জরাজীর্ণ হইবে না )। যদি সন্তান রাক্ষসদৃষ্টিতে গৃহীত হয়, তাহা হইলে অগ্নির সমিন্ধনার্থ, বজ্রপাতে বিনষ্ট বৃক্ষের কাষ্ঠ ব্যবহার করিবে এবং যে শুক্লবর্ণা গাভীর শুক্লবর্ণই বৎস হইয়াছে, তাদৃশ গাভীর বা অভাবে সর্ব্ববিধ গাভীরই দুগ্ধ-সমুদ্ভূত ঘৃত, ঐ হোমে ব্যবহার করিবে এবং প্রয়োগ দিনেই বিল্ব বৃক্ষের মণি তুলিয়া তাহাকে ত্রিপর্ব্বা করিবে, পরে অগ্নি স্থাপন পূর্ব্বক আবৃত-প্রকারে ব্যাহৃতি হোম করিয়া অগ্নির পশ্চাদ্ভাগে ঐ বিল্বমণি রাখিয়া 'ইন্দ্র ত্রিধাতু শরণম্' এই সামে অন্যূন এক শত, সহস্রাবধি আহুতি প্রদান করিবে। সেই মণি ঐ বালকের কণ্ঠে অথবা মস্তকে ধারণ করাইলেই রক্ষোভয় হইতে রক্ষা পাইবে। বিশেষত 'যদ্বাউ বিশ্পতিঃ' সামটী সর্ব্বদা প্রয়োগ করিলে শিশুর কখন কোনরূপ অমঙ্গল ঘটিবে না ॥ (১)

आमयावी कौम्भं घृतं विश्वाः पृतना अभि भूतरं नर इत्येतेनाभिजुहुयात्सहस्रकृत्वः शतावरं जीवेति चास्य निधनं कुर्यादेतेनैव सदा प्राश्नीयान्मुच्यत आमयाव्यानो मित्रावरुणेति वैतत् सदा प्रयुञ्जीत स्वस्ति ह्यस्य भवति (२) ॥ २ ॥

अथ रोगोपशान्तिकामस्य प्रयोग माह— आमयावीति। आमयो रोगस्तद्वान् 'आमयावी', 'कौम्भं' कुम्भे निहितं 'घृतम्'। 'विश्वाः पृतना अभि भूतरन्नरः'-'इत्येतेन' मन्त्रेण 'सहस्रकृत्वः' सहस्रसङ्ख्यापर्यन्तं 'शतावरं' शतसङ्ख्याया अन्यूनं यथासम्भवं द्विशतत्रिशतादिकम् 'अभिजुहुयात्'। 'अस्य' मन्त्रस्य अन्ते 'जीवेति निधनं कुर्य्यात्'। 'एतेनैव' कौम्भेन हुतशिष्टेनैवान्नमन्नं 'सदा' भोजनकाले 'प्राश्नीयात्'। एवं कृते 'आमयावी' व्याधिभ्यो 'मुच्यते'। 'आ नो मित्रा'-इत्यादि स्पष्टम् (२) ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये
द्वितीयः खण्डः ॥ २ ॥

( রোগশান্তির প্রয়োগ )

রোগী ব্যক্তি, 'বিশ্বাঃ পৃতনা অভি ভূতরং নরঃ' এই মন্ত্রে অন্যূন এক শত, সহস্র পর্য্যন্ত মট্‌কার ঘৃতের আহুতি প্রদান করিবে, এবং ঐ সামের নিধন ভাগে * 'জীব' শব্দ গান করিবে।

* সামের পঞ্চম ভাগকে বা শেষ ভাগকে নিধন কহে।

সেই হুতাবশিষ্ট ঘৃত প্রতিদিন অন্নের সহিত ভোজন করিবে। এই নিয়মে রোগী রোগ হইতে মুক্ত হইবে। 'আ নো মিত্রাবরুণা' এই সাম সর্ব্বদা প্রয়োগ করিবে, তাহা হইলে ঐ ব্যক্তির রুগ্নত্বও বিদূরিত হইবে (২) ॥ ২ ॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত,
সামবিধান ব্রাহ্মণের দ্বিতীয়াধ্যায়-দ্বিতীয়খণ্ডের
যথাক্ষর বঙ্গানুবাদ সমাপ্ত ॥

---

॥ অথ তৃতীয়: খণ্ড: ॥

**অথ যদস্য রুজেচ্ছন্নো দেবী রহস্যেন ঘৃত মভি গীয়াভ্যঞ্জ্যাচ্ছাম্যতি হ দ্বিকাদ্যেন বোদকং পায়য়েচ্ছী-তাভিরদ্ভিরভিষিচয়েৎসোমং রাজানং সনাদগ্নেঽগ্নিং হোতার মিত্যেতানি চৈন মভিশ্রাবয়েচ্ছাম্যতি হ (১)**

অথ ক্ষুদ্ররোগশান্তিকামস্য প্রয়োগ মাহ— অথ যদস্যেতি। উক্তোঽথশব্দার্থ:। 'অস্য' অধীতসামরহস্যস্য যজমানস্য সম্বন্ধি 'যদ্' অঙ্গ' 'রুজেৎ' ব্যথয়েৎ; সামর্থ্যাদাময় ইতি লভ্যতে; তস্যা-পনুত্তয়ে 'শন্নো দেবী:'-ইত্যস্যাঙ্গীতেন 'রহস্যেন' 'ঘৃত মভিগীয়' ঘৃত মাজ্যং সৃজ্যমানম্ অভিগায়েৎ তথা ঘৃত মভিগীত্বা, তেন ঘৃতেন 'অভ্যঞ্জ্যাৎ'। প্রতিদিন তথা কৃতে তস্য শান্তির্ভবতি।

অথাত্রৈব প্রয়োগান্তর মাহ— দ্বিকাদ্যেনেতি। অয়ং প্রয়োগো ঽনধীতসামাধ্যয়নস্য। 'দ্বিকাদ্যেন' শন্নোদেবীরিত্যস্যাং গীতয়ো:

प्रथमेनाभिमन्त्रितम् 'उदकम्' उष्णं 'पाययेत्'। 'वा' शब्दः पूर्वप्रयोगेण विकल्पार्थः। 'सोमं राजानम्'-इत्येतेन शीतोदकैः 'अभिषेचयेत्'। शिष्टं सुगमप्रायम्। उदकपानाभिषेचने अपेक्षया 'एतानि च'-इति 'च'-शब्दः ॥ (१)

(আমবাতরোগবারণ প্রয়োগ)

যদি অধীত-বেদ দ্বিজের কোন অঙ্গে বাত-বেদনা উপস্থিত হয়, তবে অরণ্যগানে পঠিত 'শন্নোদেবী' সাম দ্বারা ঘৃত পড়িয়া কএক দিন সেই অঙ্গে মর্দ্দন করিবে, তাহা হইলে উহা আরোগ্য হইবে। যদি অনধীত ব্যক্তির কোন অঙ্গে বাত-বেদনা হয়, তবে তাহাকে গেয়গানে শ্রুত 'শন্নোদেবী' ঋকে গীত সামদ্বয়ের প্রথম সামটি দ্বারা উষ্ণ উদক পান করাইবে; অথবা ঐ মন্ত্রের দ্বারা সুশীতল জল পাঠ করিয়া তাহাতে অভিষেক করাইবে, এবং ঐ রোগীকে 'সোমং রাজানং'—'সনাদগ্নে'—'অগ্নিং হোতারং' এই সামত্রয় নিরন্তর শ্রবণ করাইবে। এইরূপে উহার ঐ রোগ নিশ্চয় আরোগ্য হইবে ॥ (১)

शङ्खपुष्पीᳬ सर्पसुगन्धां वोत्थाप्य तदहस्त्रिवृतं कारयेत् मणिं मणिं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय चर्षणी धृत मिति वर्गेणाभिजुहुयात् सहस्रकृत्वः शतावरं तं मणिं कण्ठेन शिरसा वा धारयतो न सर्पभयम् भवति कयानायां च सर्पसाम सदा प्रयुञ्जीत स्वस्ति हास्य भवति (२)

अथ सर्पभयपरिहारकामस्य प्रयोग माह— शङ्खपुष्पी मिति। कदाचिदपि सर्पभयं मे माभूदिति य इच्छेत्, सः 'शङ्खपुष्पीं'

'सर्पसुगन्धां' बिल्वपत्रसदृशसूक्ष्मपत्रोपेतां विषहरणप्रयोगप्रसिद्धा मोषधिं 'च' पिष्ट्वा 'त्रिवृतं' मणिं' कृत्वा, 'अग्निं प्रतिष्ठाप्य'-इत्याद्युक्तम्। 'तं मणिं' कण्ठे शिरसि वा धारयेत्। तदा प्रभृति 'कयानायाम्' उपरि 'सर्पसाम' 'सदा' यथाशक्ति 'प्रयुञ्जीत'। एवं कृते विषप्रसङ्गरहितः सन् 'स्वस्ति ह' क्षेमं प्राप्नोति ॥ (२)

( সর্পভয়বারণপ্রয়োগ )

'শঙ্খপুষ্পী' ও 'সর্পসুগন্ধা' * এই উভয় গুল্ম, প্রয়োগ দিনেই উৎপাটন করত [ উহার মূল ], পেষণপূর্ব্বক ত্রিপর্ব্বা মণি প্রস্তুত করিবে। অনন্তর অগ্নি স্থাপন করিয়া আবৃতক্রমে ব্যাহৃতি-হোমানন্তর অগ্নির পশ্চাদ্ভাগে ঐ মণি স্থাপন পূর্ব্বক 'চর্ষণী ধৃতম্' এই ঋগ্‌মূলক বর্গে† অন্যূন এক শত, সহস্রাবধি আহুতি প্রদান করিবে। ঐ মণি কণ্ঠে অথবা মস্তকে যে ধারণ করিবে, তাহার সর্পভয় দূর হইবে। এবং প্রতিদিন 'কয়ানা' ঋকে সর্প সাম পাঠ করিবে, তাহা হইলে ঐ পাঠকারীর কল্যাণ হইবে অর্থাৎ কখন সর্পভয় হইবে না ॥ (২)

श्वेतपुष्पां बृहती मुत्थाप्य तदहस्त्रिवृतं कारयेन् मणिं मग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय मोषु त्वा वाघतश्चनेत्येतेनाभिजुहुयात् सहस्रकृत्वः शतावरं तं मणिं कण्ठेन शिरसा वा धारयतो न शस्त्रभयं भवति यत इन्द्र भयामह इति चैतत् सदा प्रयुञ्जीत स्वस्ति हास्य भवति (३)

---

* সায়ণাচার্য্য বলেন,—ইহার পত্র, বিল্বপত্রের ন্যায় কিন্তু ক্ষুদ্র।

† সর্প, প্রসর্প, উৎসর্প নামক তিন সামের এই বর্গ।



**अथ शस्त्रभयनिवृत्तिकामस्य प्रयोग माह — श्वेतपुष्पा मिति। पूर्ववद्योज्यम् ॥ (२)**

(শস্ত্রভয়বারণপ্রয়োগ)

শ্বেতপুষ্পা বৃহতী গুল্ম, প্রয়োগ দিনেই উৎপাটন করিয়া [উহার মূল] পেষণ করিয়া ত্রিপর্ব্বা মণি প্রস্তুত করিবে। তদনন্তর অগ্নিস্থাপন করিয়া আবৃতক্রমে ব্যাহৃতি-হোমানন্তর অগ্নির পশ্চাদ্ভাগে ঐ মণি স্থাপনপূর্ব্বক 'মোষু ত্বা বাঘতশ্চন' এই ঋকে গীত সামদ্বয়ে অন্যূন এক শত, সহস্রাবধি আহুতি প্রদান করিবে; ঐ মণি কণ্ঠে অথবা মস্তকে যে ধারণ করিবে, তাহার শস্ত্রভয় দূর হইবে। এবং প্রতিদিন 'যত ইন্দ্র ভয়ামহে' ঋকে গীত সাম পাঠ করিবে, তাহা হইলে ঐ পাঠকারীর শস্ত্রভয় থাকিবে না ॥ (৩)

**श्वेतपुष्प मर्क मुत्थाप्य तदहस्त्रिवृतं कारयेन् मणि मग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय श्वाशिरामर्केणाभिजुहुयात् सहस्रकृत्वः शतावरं तं मणिं कण्ठेन शिरसा वा धारयन् बह्वन्नो भवति दीर्घतममोऽर्को ऽर्कशिरो ऽर्कग्रीवा इति चैतानि प्रयुञ्जानः सर्वमान्नं लभते समन्यायन्तीनिधनं प्रयुञ्जानो न पिपासया म्रियते (४)**

**अथ बह्वन्नकामस्य प्रयोग माह— श्वेतपुष्प मर्क मिति। स्पष्टोऽर्थः ॥**

**अथ सर्वान्नकामस्य प्रयोग माह— दीर्घतमसोऽर्क इति। स्पष्टोऽर्थः ॥**

अथ पिपासाभावेच्छोः प्रयोग माह— समन्यायन्तीतीति। 'समन्यायन्तीति' अचोत्पन्नम् 'ई'-इति 'निधनं' यस्य तत् साम सदा प्रयुञ्जानस्य 'पिपासया' मरणं 'न' भवति ॥ (৪)

( জীবিকাভাব-ভয়বারণ প্রয়োগ )

প্রয়োগ-দিনে শ্বেতার্কপুষ্পের বৃক্ষ উৎপাটন করিয়া [ তাহার মূল দ্বারা ] ত্রিপর্ব্বা মণি প্রস্তুত করিবে। অনন্তর অগ্নি স্থাপন পূর্ব্বক আবৃতক্রমে ব্যাহৃতি-হোমানন্তর অগ্নির পশ্চাদ্ভাগে ঐ মণি স্থাপন করিয়া 'স্বাশিরামর্ক' সামে সহস্রাবধি অন্যূন এক শত আহুতি প্রদান করিবে। ঐ মণি কণ্ঠে বা মস্তকে যে ধারণ করিবে, তাহার দারিদ্র্য হইবে না। 'দীর্ঘতমসোঽর্ক', 'অর্কশিরঃ' ও 'অর্কগ্রীবা' এই সামত্রয় সর্ব্বদা প্রয়োগকারী, সর্ব্বত্র অন্ন লাভ করে। ঈ-নিধন 'সমন্যা য়ন্তি' সামের সতত প্রয়োগকারীর পিপাসায় প্রাণ-বিয়োগ হয় না ॥ (৪)

इष्टाहोत्रीयं प्रयुञ्जानो नाप्सु म्रियते (৫)

अथाप्सु मरणाभावेच्छोः प्रयोग माह— इष्टाहोत्रीय मिति। स्पष्टम् ॥ (৫)

( জলমগ্ন-ভয়বারণ প্রয়োগ )

'ইষ্টাহোত্রীয়' নামক সামের সতত প্রয়োগকারীর জলমগ্নে মৃত্যু হয় না ॥ (৫)

अचोदस इति तृतीयं प্রयुञ्जीत नैनं यक्ष्मा गृह्णाति (৬)

'आमयावी कीश्वरम्'-'अथ यदस्य रुजेत्'--इत्याभ्याम् ( ৯২, ৯৩ पृ० ) अवान्तररोगस्य शरीरैकदेशरोगस्यैव प्रयोग उक्तः; अथ

अघोदस इत्यादिना क्षयादिरोगस्य प्रयोग उच्यते— अघोदस इतीति । स्पष्टोऽर्थः ॥ (६)

( যক্ষ্মা-ভয়বারণ প্রয়োগ )

'অচোদসঃ' ঋকে গীত তৃতীয় সাম সতত প্রয়োগ করিবে, তাহা হইলে উহাকে যক্ষ্মারোগ আক্রমণ করিবে না ॥ (৬)

**त्व मिमा ओषधीरित्येतत्सदा प्रयुञ्जानो न गरेण म्रियते सन्तेपयाꣳसीति पूर्वेण प्रथमं ग्रासं ग्रसेदु-त्तरेण निगिरेद् विष मप्यस्यान्नं भवति नैनꣳ हिꣳसति नैनꣳ हिꣳसति (७) ॥ ३ ॥**

अथ विषमरणाभावकामस्य प्रयोग माह— त्व मिमा इति । 'गरः' कृत्रिमविषम्, तेन उक्तसामानुष्ठातुर्न कदापि मृति-र्भवति ॥

अथ निर्विषीकरणप्रयोग माह— सन्ते पयांसीतीति । 'सन्ते पयांसीति' अस्या मुत्पन्नेन 'पूर्वेण' साम्ना 'प्रथमं ग्रासं ग्रसेत्' भोजनकाले वदने निक्षिपेत्, 'उत्तरेण' साम्ना 'निगिरेत्' अन्त-रान्तरं प्रवेशयेत् । एवं कृते सति 'अस्य' भोक्तुः 'विष मपि' 'अन्नम्' अन्नवत्पुष्टिकरम् 'भवति', 'एनं' प्रयोक्तारं 'न हिंसति' न कदाचिदपि हिनस्ति ॥ (७)

'हिंसति: खण्डसमाप्तिद्योतनार्था ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये
तृतीयः खण्डः ॥ ३ ॥

( বিষভয়বারণ প্রয়োগ )

'ত্ব মিমা ওষধীঃ' এই ঋকে গীত সামটি যে সর্ব্বত প্রয়োগ করে, সে কৃত্রিম বিষে পঞ্চত্ব পায় না। 'সন্তে পয়াংসি' এই ঋকে গীত সামের প্রথম ভাগ পাঠ করিয়া গ্রাস গ্রহণ করিবে, উহারই দ্বিতীয় ভাগ পাঠ করিয়া ঐ গ্রাস নিগরণ করিবে (গিলিবে); এ নিয়মে আহারকারীর বিষও অন্ন হইবে,— বিষ, ইহাকে বিনষ্ট করিবে না (৭) ॥ ৩ ॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত,
সামবিধান ব্রাহ্মণের দ্বিতীয়াধ্যায়-তৃতীয়খণ্ডের
যথাক্ষর বঙ্গানুবাদ সমাপ্ত ॥

———

॥ অথ চতুর্থঃ খণ্ডঃ ॥

करवीरदण्ड मुत्थाप्य देवव्रतैरभिजुहुयादनुगान-शस्तेन हस्तगतेन यत्र क्व च गच्छति सर्व्वत्र हास्य स्वस्ति भवति तेन नगरं वा निगमं वा ग्रामं वा गोष्ठं वा ऽऽगारं वा मनसा ध्यायन् परिलिखेन्नाना-निष्टाः प्रविशन्ति प्रतिभयेऽध्वनि देवव्रत माद्यं गीत्वा मध्यम मावर्त्तयेद् गतेऽध्वन्युत्तमꣳ समापयित्वा विरमेदुद्यतशस्त्रान् शत्रून् दृष्ट्वा देवव्रतानि मनसा ध्यायेन्नैनꣳ हिꣳसन्त्यमानुषे भये कयानायास्तृतीय मावर्त्तयेन्नैनꣳ हिꣳसन्त्यध्वान मभ्युत्थित मामन्द्रैरिति

**वर्गं गीत्वानपेक्षमाणो व्रजेत् स्वस्त्यर्थं चरितः पुनरैति नाध्वनि च प्रमीयते ऽन्यो वैन मनुगायेत् कदाचन-स्तरीरसीत्येतेनं चैन मभिश्रावयेदर्द्धसाम्नि प्रदक्षिणा मावर्त्तयेत्. समाप्यानपेक्षमाणः परो व्रजेत् स्वस्त्यर्थ-चरितः पुनरैति नाध्वनि च प्रमीयत एषो उषा अपूर्व्येति संविशन् सदा प्रयुञ्जीताकालꣳ स्वस्त्ययन मुदिते यदद्य कच्च वृत्रहन्नित्याकालꣳ स्वस्त्ययनम् (१)**

अथ सर्वत्र क्षेमकामिनः प्रयोग माह— करवीरदण्ड मिति। क्षेमकामो 'करवीरदण्डम्' 'उत्थाप्य' सम्पाद्य 'देवव्रतैः' सामभिः अग्नौ हुत्वा तत्संस्रवेण दण्डस्योपरि 'अभिजुहुयात्'। ततस्त मभि-मृश्य तैरेवानुगायेत्। अत्रापि सहस्रकृत्वः शतावरं गायेत्। होम मनु गानञ्चेति द्रष्टव्यम्। एवम् 'अनुगानशस्तेन' अनु-गानेन प्रशस्तेन 'हस्तगतेन' दण्डेनोपलक्षितो 'यत्र क्व च गच्छति', तत्र 'सर्वत्र ह्यास्य' 'स्वस्ति' अविनाशः क्षेमो 'भवति'॥

अथोक्तप्रयोगविशिष्टस्य दण्डस्य नगरादिरक्षणे विनियोग माह— तेन नगरं वेति। 'तेन' होमानुगानाभ्यां प्रशस्तेन करवीरदण्डेन नगरादीना मन्यतमं भयोपद्रुतं रक्षितु मिच्छेत्, तं 'मनसा ध्यायन्' चौरादिभ्यो रक्षास्त्विति चिन्तयन् 'परि-लिखेत्' बहिः परितो लेखं कुर्यात्। 'नात्रानिष्टाः प्रविशन्ति'॥

अथाध्वनि भयनिवृत्त्यर्थं प्रयोग माह— प्रतिभये इति। 'प्रतिभये' सम्प्राप्ते भये 'अध्वनि' मार्गे प्राप्ते सति 'देवव्रत माद्यं' साम सकृद् 'गीत्वा',—गमनकाले 'मध्यमं' देवव्रतम्

'आवर्त्तयेत्' आवर्त्तयन्नेव मार्गं गच्छेत्,— 'अध्वनि' 'गते' अतीते सति 'उत्तमम्' अन्तिमं' देवव्रतं' 'समापयित्वा' 'विरमेद्' अवसानं कुर्यात्। एवं कृते मार्गे प्राप्त मन्तिभयं निवर्त्ततैव॥

अथ भयकारिणां शत्रूणां प्रत्यक्षदर्शने सति तदपगमोपाय माह— उद्यतशस्त्रानिति। स्पष्टोऽर्थः॥

अथार्थाद्यर्थ मध्वानं गच्छतः क्षेमेण सार्थं पुनरागमनकामस्य प्रयोग माह— अध्वान मिति। 'अध्वान'' गन्तव्यं मार्गम् 'अभ्युत्थितः' अभिक्रमणाय तिष्ठन्। 'आमन्त्रैरिति वर्गं गीत्वा' 'अनपेक्षमाणः' अतीतं मार्गं पुनर्गमनाय अनाकाङ्क्षमाणो 'व्रजेत्'। 'स्वस्त्यर्थचरितः' क्षेमविशिष्टार्थलक्षणः सन् 'पुनः' स्वगृहम् 'एति' आगच्छति। 'नाध्वनि च प्रमीयते' पथि न नश्यति॥

अथानधीतसामकस्य प्रयोग माह— अन्यो वैन मिति। 'अन्यो वा' साम्नाध्येता कश्चिद् 'एनम्' अनधीतं अर्थार्थं गन्तारम् 'अनुगायेत्'। किं गायेत्? पूर्वोक्त मिति गम्यते। किञ्च 'कदाचनेत्येतेन' साम्ना 'एन मभिश्रावयेत्'। उक्तसामगानं 'समाप्य' अर्थार्थिनम् 'अनपेक्षमाणः' 'परः' प्रयोक्ता एक एव 'व्रजेत्' स्वगृहम्; स न गच्छेदित्यर्थः। शेषं स्पष्टम्।

केचिदेव माहुः— समाप्य व्रजेदिति पूर्वकालतामात्रे क्त्वा-प्रत्ययः, न समानकर्त्तृकत्वेऽपि; अतः पर इत्येतत् न प्रकृतादन्य माचष्टे किन्तु सामप्रयोक्तुः पर मन्य मर्थार्थिनम्। एवं च समाप्ते साम्नि परो ऽप्यर्थार्थी गच्छन्, गन्तार मन्य मर्थार्थिन मन-पेक्षमाणो गच्छेदिति॥

अथ रात्रावहनि च स्वस्त्ययन कामस्य प्रयोग माह— एषो उषा इति। 'एषो उषा अपूर्व्येति' एतत्साम 'सदा' सर्वदैव रात्री

**'संविशन्' शयनं कुर्वन् 'प्रयुञ्जीत'; तथा सति 'आकाल'' पुनरुदयकालपर्यन्तं 'स्वस्त्ययनं'' भवति। 'उदिते' च सूर्ये 'यदद्य कच्च वृत्रहन्निति' एतत्साम सदैवाहनि प्रयुञ्जीत; तथा सति 'आकाल'' पुनरस्तमयकालपर्यन्तं 'स्वस्त्ययनं'' भवति ॥ (१)**

( সর্ব্বত্র ভয়বারণ প্রয়োগ )

করবীর শাখার দণ্ড সম্পাদন করিয়া অগ্নির পশ্চাদ্ভাগে স্থাপন পূর্ব্বক 'দেবব্রত'-নামক সামত্রয় দ্বারা প্রতিসামে সহস্রাবধি, অন্যূন শতবার, আহুতি প্রদান করিবে। সেই দণ্ড হস্তে লইয়া যে কোন স্থলে যাইবে, সর্ব্বত্রই তাহার কল্যাণ হইবে। নগর অথবা নিগম অথবা গ্রাম অথবা গোষ্ঠ অথবা আগার, যে কোন স্থলই হউক, মনে মনে চিন্তা করিয়া ( ঐ দণ্ডদ্বারা ) অঙ্কিত করিবে ;—[ যাহার আকৃতি বা নাম অঙ্কিত করিবে ] ইহার মধ্যে কোনরূপ অনিষ্ট প্রবেশ করিবে না। কোন ভয়ানক পথে গমনকালে প্রথম 'দেবব্রত' সামটী গান করিয়া গমনারম্ভ করিবে,—মধ্যম 'দেবব্রত'টী আবৃত্তি করিতে করিতে চলিতে থাকিবে, পথ অতীতপ্রায় হইলে অন্তিম 'দেবব্রত' সাম গান করিয়া বিরত হইবে। উদ্যত শস্ত্র-শত্রুকে দেখিয়া 'দেবব্রত' সামগুলি মনে মনে ধ্যান করিবে; তাহা হইলে তাহাকে কেহই হিংসা করিতে পারিবে না। মনুষ্য-ভিন্ন ভয়-কারণ থাকিলে 'কয়ানা' ঋকে গীত তৃতীয় সামটি বার বার গান করিবে, তাহা হইলে তাহাকে কেহই হিংসা করিবে না। প্রবাস গমনে উদ্যত হইলে 'আ মন্দ্রৈঃ' ঋগ্মূলক বর্গ গান করিয়া নির্ভয়ে যাত্রা করিবে, এতৎফলে কল্যাণে থাকিয়া কার্য্যসিদ্ধি করিয়া পুনরাগত হইবে; পথিমধ্যে তাহার মৃত্যু হইবে না। যে ব্যক্তি ঐ সাম অধ্যয়ন করে নাই, সে কোন সামগ ব্যক্তির সাহায্যে ঐ সাম বা 'কদাচনস্তরী-

রসি' ঋকে শ্রুত সাম গান করিবে ( অর্থাৎ কোন সামগ উহাকে ঐ বা ঐ সাম গান করাইয়া দিবে ) । [ যদি ঐরূপ অনুক্ত পাঠেও অসমর্থ হয়, তবে ] তাহাকে 'কদাচন' সামটী শ্রবণ করাইয়া দিবে ;— অর্দ্ধসাম শেষ হইতে হইতেই উহাকে প্রদক্ষিণ করাইবে, সামগান সমাপন হইলে সেই যাত্রাকারী, অন্য ব্যক্তির সহায়াদি অপেক্ষা না করিয়াই যাত্রা করিবে। এতৎফলে কল্যাণে থাকিয়া কার্য্যসিদ্ধি করিয়া পুনরাগত হইবে ; পথিমধ্যে তাহার মৃত্যু হইবে না। সূর্য্যোদয়ের পূর্ব্বে ( উষাকালে ) 'এষো উষা অপূর্ব্ব্যা' এই সাম পাঠ করিয়া কার্য্যক্ষেত্রে প্রবিষ্ট হইবে ;—এই স্বস্ত্যয়ন সায়ংকাল পর্য্যন্তের জন্য হইবে। সূর্য্যাস্তের অব্যবহিত পূর্ব্বে ( সায়ং ) 'যদদ্য কচ্চ বৃহত্রন্' এই সাম পাঠ করিবে ;—এই স্বস্ত্য-য়ন পুনরুদয় কাল পর্য্যন্তের জন্য হইবে ॥ (১)

**मूलफलैरुपवसथं कृत्वा मास मुपवसेदरण्ये निस्तान्तवो मुनिर्या रौहिणी वा पौषी वा पौर्णमासी स्यात्तदहरुद्यन्त मादित्य मुपतिष्ठेतोद्वयं तमसस्परी-त्येतेन तत ऊर्द्ध्वं तद्वूतस्तन्नचस्वतोरि वर्षाणि प्रभु-स्नानो जरामृत्यू जहाति जरामृत्यू जहाति (२) ॥४॥**

अथ जरामृत्युजयप्रयोग माह— मूलफलैरिति। मूलैः फलैर्वा मूलफलैर्भक्ष्यैर्वा 'उपवसथ' दिने ऽल्पभोजन मुपवसथम्, तेन शरीरनिर्वाह' 'कृत्वा' 'मास' मासपर्यन्तम् 'अरण्ये उप-वसेत्' ;— 'निस्तान्तवः' तन्तुनिर्मित' वस्त्र' तान्तवम्, तेनानपि-हितो ऽजिनवल्कलाद्याच्छन्नः, 'मुनिः' वाङ्नियमोपेतः सन्। 'या' 'रौहिणी वा' रोहिणीनक्षत्रयुक्ता वा 'पौर्णमासी', 'पौषी

वा' पुष्यनक्षत्रोपेता वा भवेत्, 'तदहः' तयोरेकस्मिन्दिने 'उद्यन्त मादित्यम्' 'उद्वयन्तमसस्परीत्येतेन' साम्ना 'उपतिष्ठेत'। 'ततः ऊर्ध्वं' 'तद्व्रतः' ऊक्तानिस्तान्तवमौनव्रतोपेतः, 'तद्भक्षः' उक्तमूल-फलभक्षः सन्, 'चत्वारि वर्षाणि' एव 'प्रयुञ्जानः', 'जरामृत्यु जहाति' न कदाचिज्जरां मरणञ्च प्राप्नोतीत्यर्थः ॥

अभ्यासः खण्डसमाप्त्यर्थः (२) ॥ ४ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये
चतुर्थः खण्डः ॥ ४ ॥

(জরা-ভয়বারণ প্রয়োগ)

তন্তু-নির্ম্মিত বস্ত্র পরিধান না করিয়া, মৌনব্রত হইয়া, দিবা-ভাগে ফল মূল মাত্র ভক্ষণে ক্ষুন্নিবৃত্তি করত এক মাস কাল অরণ্যে বাস করিবে; ঐ মাসের মধ্যে রোহিণী-নক্ষত্রান্বিত অথবা পুষ্য-নক্ষত্রান্বিত পৌর্ণমাসী পাইলে, সেই দিন উদয় কালেই 'উদ্বয়ং তমসস্পরি' এই মন্ত্রে আদিত্যোপস্থন করিবে। অনন্তর গ্রামে প্রত্যাগত হইয়াও চারি বৎসর কাল উক্ত ব্রতাবলম্বনে ঐরূপ ভক্ষ-ণাদি ব্যবস্থায় সেই মন্ত্র জপ করিলে কখনই জরাগ্রস্ত হইবে না,—কখনই জরাগ্রস্ত হইবে না (২) ॥ ৪ ॥

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত,
সামবিধান ব্রাহ্মণের দ্বিতীয়াধ্যায়-চতুর্থখণ্ডের
যথাক্ষর বঙ্গানুবাদ সমাপ্ত ॥

---

॥ अथ पञ्चमः खण्डः ॥

अथैकमनुष्याणा मावर्त्तनꣳ स्त्रिया वा पुꣳसा वा श्रवणेन व्रत मुपेत्य पूर्वैः प्रोष्ठपदैः पाꣳसुभिः प्रतिकृतिं कृत्वा प्राक्शिरसं पूर्वाह्णे दक्षिणाशिरसं मध्याह्ने प्रत्यक्शिरस मपराह्णे ऽर्द्धरात्र उदक्शिरसं तस्या हृदयदेश मधिष्ठायायन्त इन्द्र सोम इति ब्राह्मणस्येदन्त एक मिति क्षत्रियस्यैष प्र कोश इति वैश्यस्य विभोष्ट इन्द्र राधस इति शूद्रस्योद्धयन्तमसस्परीति वा सर्वेषाꣳ सौवर्णीं प्रतिकृतिं कुर्याद् ब्राह्मणस्य राजतीं क्षत्रियस्यौदुम्बरीं वैश्यस्यायसीꣳ शूद्रस्यौदुम्बरीं वा सर्वेषा मय मसाविति प्राक्शिरस मग्नौ प्रतिष्ठाप्यौदुम्बरेण स्रुवेणाज्येनाभिजुहुयादच्छाव इतीनिधनेन गुणी ह्यास्य भवति कृष्णव्रीहीणां नखनिर्भिन्नानां पिष्टमयीं प्रतिकृतिं कृत्वा पिष्टस्वेदꣳ स्वेदयित्वा सर्षपतैलेनाभ्यज्य तस्याः क्षुरेणाङ्गान्यवदायाग्नौ जुहुयात् प्र मन्दिन इत्येतेन शेषꣳ स्वयं प्राश्नीयादितरथाभावे म्रियेत (१)

अमरादीनां मनुष्यादीनाञ्च वशीकरण मुपरिष्टाद्वक्ष्यते ;— इदानी मेकमनुष्यवशीकरणप्रयोग माह ; तत्रानेन प्रतिजानीते— अथैकमनुष्याणा मिति । अथेत्यर्थान्तरद्योतनार्थः ।

कामनुष्याणाम्' एकस्य मनुष्यजातीयस्य 'आवर्त्तन'' वशी-
रणम्; तत्प्रयोग उच्यते इति शेषः। तदेव विशिनष्टि—
स्त्रिया वा पुंसो केति। यस्य नारी वा पुमान्वा वशीकर्त्तव्यः स्यात्,
स्य 'स्त्रियाः पुंसो वा' 'आवर्त्तन'' वशीकरणम्; तत्प्रयोगो
च्यते इति॥

अथ तस्य व्रतारम्भकाल माह— श्रवणेन व्रत मिति। 'श्रव-
न' श्रवणनक्षत्रेण युक्ते चन्द्रमसि 'व्रतम्' ''अथातः काम्याना
नादेशे त्रिरात्र मुपवासः''—इत्युक्तं ( ८२ पृ० ) व्रतम् 'उपेत्य'
पक्रम्य, वक्ष्यमाणं प्रयोग' विहितकाले कुर्यात्॥

अथ तत्प्रयोग माह— पूर्वैरिति। 'पूर्वैः प्रोष्ठपदैः' युक्ते चन्द्र-
सि वक्ष्यमाण' प्रयुञ्जीत। 'पांसुभिः' साध्यस्य पुरुषस्य वा
स्त्रिया वा 'प्रतिकृतिं कृत्वा', 'अय मसाविति' पुरुषस्य, इय मसा-
विति स्त्रियाः, नाम उच्चार्य, तत्प्रतिकृतौ मनसा साध्यरूपं भाव-
यित्वा प्राण' प्रतिष्ठाप्य, तां 'प्राक्शिरसं पूर्वाह्णे', दक्षिणाशिरसं
मध्याह्ने, प्रत्यक्शिरस मपराह्णे, 'अर्द्धरात्रे उदक्शिरसं' विविक्ते
देशे संस्थाप्य 'तस्याः' प्रतिकृतेः 'हृदयदेश मधिष्ठाय' पादेनाक्रम्य,
ब्राह्मणस्य' ब्राह्मण्या वा प्रतिकृतिश्चेत्, तां स्पृष्ट्वा 'अयन्त इन्द्र
सोम इति' साम जपेत्। एव मुत्तरत्रापि योज्यम्। 'क्षत्रियस्य'
चेत् 'इदन्त एक मिति' जपेत्। 'वैश्यस्य' वैश्यजातीयस्य चेत्प्रति-
कृतिः 'एष प्रकोश इति' जपेत्। 'शूद्रस्य' चेत्] 'विभोष्ट इन्द्र राधस
इति'। 'वा' अथवा सर्वेषां प्रतिकृतौ 'उद्दय मिति'* जपेत्। अथ
जातिभेदेन 'ब्राह्मणस्य' अन्यां 'सौवर्णीं' प्रतिकृतिं कुर्यात्', 'क्षत्रि-
यस्य राजतीम्', 'वैश्यस्यौदुम्बरीं' ताम्रमयीम्, 'शूद्रस्यायसीम्'

* भारण्डसामैकांशास्थितरूपेय मग्न ब्राह्मणे श्रुता।

कृष्णायसनिर्म्मिताम्। 'वा' अथवा 'सर्वेषाम् औदुम्बरीं' ताम्रमयीम्। स्त्रियाः पुरुषस्य वा साध्यस्यान्यां प्रतिकृतिं कृत्वा, अयं मसाविति पुरुषस्य, इयं मसाविति स्त्रियाः प्राणप्रतिष्ठां मनसा कृत्वा, तां प्रतिकृतिम् 'अग्नौ' 'प्राक्शिरसं प्रतिष्ठाप्य' 'औदुम्बरेण' ताम्रमयेन 'स्रुवेण' 'अच्छा व इति' मन्त्रेण 'ई'-निधनयुक्तेन, 'आज्येन' 'अभिजुहुयात्'। एवं कृते 'अस्य' साधकस्य साध्यः पूर्वं मगुणोऽपि 'गुणीभवति'। गुणशब्दादभूततद्भावे च्विः (पा० ५. ४. ५०.), तस्य सर्वापहारी लोपः, तस्य गतिसंज्ञायां "ते प्राग्धातोः"-इति (पा० १.४.८०.) प्राक्प्रयोगः प्राप्तोऽपि "व्यवहिताश्च"-इति (पा० १.४.८२.) ह्यस्येतिपदद्वयेन व्यवहितः प्रयोगः॥

अथास्य प्रयोगान्तर माह— कृष्णव्रीहीणा मिति। 'कृष्णव्रीहीणां' कृष्णवर्णानां व्रीहीणां 'नखनिर्भिन्नानाम्' अवघातेन विना नखैः सम्पादितानां तण्डुलानां पिष्टेन, साध्यस्य पुरुषस्य वा स्त्रिया वा 'प्रतिकृतिं कृत्वा', पूर्ववदयमसाविति जीवं प्रतिष्ठाप्य, तस्या उपरि 'पिष्टस्वेदं' यावता पाकेन पिष्टं स्विद्यते, तथा 'स्वेदयित्वा' तां 'सर्षपतैलेन' 'अभ्यज्य' अभितः अङ्क्त्वा 'क्षुरेण' अयोमयेन तस्याः हृदयव्यतिरिक्तानि 'अङ्गानि' 'अवदाय' विभज्य खण्डयित्वा 'प्र मन्दिने इत्येतेन' साम्ना 'अग्नौ जुहुयात्'। 'शेषं' इतरशेषं हृदय मङ्गं 'स्वयं प्राश्नीयात्'; 'इतरथाभावे' शेषभक्षणाकरणे 'म्रियते' स्वय मेव मृतो भवेत्; अतः अवश्यं हृदय मङ्गं भक्षयेदित्यर्थः। एवं कृते गुणी ह्यस्य भवतीत्यनुषज्यते॥ इत्येकपुरुषावर्त्तनं उक्तः॥ (१)

(বশীকরণ প্রয়োগ)

স্ত্রীজাতি হউক অথবা পুরুষজাতিই হউক, কোন এক ব্যক্তিকে

বশে করিবার উপায় এই— শ্রাবণী পৌর্ণমাসীতে এই ব্রত আরম্ভ করিয়া, ভাদ্রী পূর্ণিমায় পাংশু দ্বারা [ যে স্ত্রী বা যে পুরুষকে বশীভূত করিতে হইবে, তাহার ] প্রতিকৃতি নির্ম্মাণ করিবে। পরে "এই অমুক স্ত্রী' বা অমুক পুরুষ' বলিয়া সেই প্রতিমূর্ত্তির নামকরণ পূর্ব্বক স্বীয় অভিলাষ মনে-মনে ধ্যান করিবে। ঐ প্রতিমূর্ত্তিকে পূর্ব্বাহ্ণে পূর্ব্বশিরা, মধ্যাহ্নে দক্ষিণশিরা, অপরাহ্নে পশ্চিমশিরা ও অর্দ্ধরাত্রে উত্তরশিরা, স্থাপন করিয়া তাহার হৃদয়দেশে অবস্থিত হইয়া, ব্রাহ্মণের জন্য হইলে 'অয়ন্ত ইন্দ্র সোম' সাম, ক্ষত্রিয়ের জন্য হইলে 'ইদন্ত একং' সাম, বৈশ্যের জন্য হইলে 'এষ প্র কোশে' সাম এবং শূদ্রের জন্য হইলে 'বিভোষ্ট ইন্দ্র রাধসে' সাম ; অথবা সকলের জন্যই 'উদ্বয়ং তমসস্পরি' মন্ত্র জপ করিবে। এবং ব্রাহ্মণের হইলে সুবর্ণময়ী, ক্ষত্রিয়ের হইলে রৌপ্যময়ী, বৈশ্যের হইলে তাম্রময়ী, শূদ্রের হইলে কৃষ্ণলোহময়ী ; অথবা সকলেরই তাম্রময়ী আর একটি প্রতিকৃতি প্রস্তুত করিবে। অনন্তর 'এই অমুক' বলিয়া মনে-মনে তাহার প্রাণ-প্রতিষ্ঠা পূর্ব্বক অগ্নির মধ্যে উহা পূর্ব্বশিরা করিয়া স্থাপন করিবে। অনন্তর তাম্রময় স্রুবের দ্বারা ঈ-নিধনযুক্ত 'অচ্ছা ব' সাম * গানপূর্ব্বক ঘৃতাহুতি প্রদান করিবে। এই অনুষ্ঠানের ফলে অভিলষিত ব্যক্তি সেই অনুষ্ঠাতার বশবর্ত্তী হইবে॥

নখের দ্বারা বিতুষীকৃত কতকগুলি কৃষ্ণ-ধান্যের তণ্ডুল পেষণ পূর্ব্বক ঐ পিঠিলির প্রতিকৃতি করিয়া এই 'অমুক' বলিয়া মনে-মনে প্রাণ-প্রতিষ্ঠা করিবে। অনন্তর সেই পিঠিলির প্রতিকৃতির সর্ব্বাঙ্গ স্বেদিত করিয়া উহাতে সর্ষপ তৈল মাখাইবে। পরে উহা ক্ষুরের দ্বারা খণ্ড খণ্ড করিয়া 'প্র মন্দিনে' ঋকে গীত সাম গান পূর্ব্বক অগ্নিতে হোম করিবে ; হুতাবশিষ্ট কিঞ্চিৎ অঙ্গ স্বয়ংও অশন

* ঐ সাম ঈ-নিধন ও বা-নিধন, এই উভয় প্রকার আছে।

করিবে। যদি অঙ্গ-হোম ও অঙ্গ-ভক্ষণ, এই কার্য্যদ্বয়ের কোনটি করিয়া কোনটি না করে, তবে স্বয়ংই মৃত হইবে ॥ (১)

अथ यः कामयेतावर्त्तयेयमित्येकरात्रं क्षुरसंयुक्तस्तिष्ठेत् सुतासो मधुमत्तमा इति वर्ग एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जान एकरात्रेण कुटुम्बिनमावर्त्तयति द्विरात्रेण राजोपजीविनं त्रिरात्रेण राजानं चतूरात्रेण ग्रामम् पञ्चरात्रेण नगरꣳ षड्रात्रेण जनपदꣳ सप्तरात्रेणासुररक्षाꣳस्यष्टरात्रेण पितृपिशाचान् नवरात्रेण यक्षान् दशरात्रेण गन्धर्वाप्सरसोऽर्द्धमासेन वैश्रवणम् मासेनेन्द्रं चतुर्भिः प्रजापतिꣳ संवत्सरेण यत्किञ्च जगत्सर्वꣳ ह्यस्य गुणी भवति गुणी भवति (२) ॥ ५ ॥

अथानेकपुरुषावर्त्तनप्रयोग उच्यते— अथ य इति। उक्तार्थोऽथशब्दः। 'यः' पुमान् वक्ष्यमाणं कुटुम्बिन मित्यादिनोक्तं बहुपुरुषात्मकं साध्यम् 'आवर्त्तेय' वशीकुर्यामिति 'कामयेत्', सः 'एकरात्र' एकाहस्सम्पूर्त्तिपर्यन्तं 'क्षुरसंयुक्तः' क्षुरं धारयन् 'तिष्ठेत्'। तस्य जपाय 'सुतासो मधुमत्तमा इति वर्गः' सामसमूहो भवेत्। 'एतेषां' तद्वर्गस्थानां साम्नां मध्ये, इच्छया 'एक' साम, 'अनेकं वा' द्वे त्रीणि इत्यादि वा, अथवा 'सर्वाणि वा' 'प्रयुञ्जानः', 'एकरात्रेण' उक्तैकरात्रनियमेन 'कुटुम्बिन' बहुकुटुम्बसंयुक्तं पुरुषम् 'आवर्त्तयति' वशीकरोति ॥

अथोक्तप्रयोगस्यैवावृत्तिविशेषेणैव राजोपजीव्यादिवशीकरणमाह— द्विरात्रेणेति। निगदसिद्धोऽयम् (२) ॥ ५ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे
सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये
पञ्चमः खण्डः ॥ ५ ॥

যে কেহ সপরিবারকে বশ করিতে অভিলাষ করিবে, সে ব্যক্তি পূর্ব্ববৎ সমস্তই করিবে, অধিকন্তু একরাত্র উদয় অবধি অস্ত পর্য্যন্ত একখানি ক্ষুর হস্তে লইয়া 'সুতাসো মধুত্তমা' ঋকে গীত বর্গের * একটি, কয়েকটি, কিংবা সমুদয়ই গান করত দণ্ডায়মান থাকিবে। এই নিয়মে এক রাত্রে সকুটুম্বকে বশীভূত করিবে; দ্বিরাত্রে রাজোপজীবী, ত্রিরাত্রে রাজা, চারিরাত্রে গ্রাম, পঞ্চরাত্রে নগর, ছয়রাত্রে জনপদ, সপ্তরাত্রে অসুর ও রাক্ষসগণ, অষ্টরাত্রে পিতৃগণ ও পিশাচবর্গ, নবরাত্রে যক্ষগণ, দশরাত্রে গন্ধর্ব্ব ও অপ্সরোগণ, অর্দ্ধমাসে দেবগণ, একমাসে ইন্দ্র, মাসচতুষ্টয়ে প্রজাপতি ও এক বৎসরে সমুদায় জগৎ বশীভূত হইবে (২) ॥ ৫

আবসথ শ্রীসত্যব্রত সামশ্রমী ভট্টাচার্য্যের কৃত,
সামবিধান ব্রাহ্মণের দ্বিতীয়াধ্যায়-পঞ্চমখণ্ডের
যথাক্ষর বঙ্গানুবাদ সমাপ্ত ॥

---

* এই বর্গটি ৮ সামের।

॥ अथ षष्ठः खण्डः ॥

अथातः सौभाग्यानाम् (१)

अथ सौभाग्यकामानां प्रयोग माह— अथात इति। 'अथ' शब्दः अधिकारार्थः,— वक्ष्यमाणप्रयोगेषु सौभाग्यकामाना मधिकारः। भज्यते इति भगः, शोभनश्चासौ भगश्च सुभगः, तस्य भावः सौभाग्यम्; सुष्ठुयोषिदादिभिर्भजनीयत्वं कामयमानानां मित्यर्थः। तेषाम् 'अतः' यतः प्रयोगाभिधाने वक्ष्यमाणफलानवाप्तिः अतस्तेषां प्रयोगः, वक्ष्यन्ते इति शेषः ॥ (१)

( সৌভাগ্যার্থ )

অতঃপর বিবিধ সৌভাগ্যোদয়ের বিবিধ উপায়স্বরূপ বিবিধ সামাধ্যয়নের বিধান বলিব ॥ (১)

यदिन्द्रो अनयदुच्चा ते जात मन्धस इति नवमदशमे एतेषा मेकं मनेकं वा सर्वाणि वा प्रयुञ्जानः सुभगो भवति इन्द्राद्यायाः सप्तमाष्टमाभ्या मिन्द्राणीं सदा तर्पयन् सुभगो भवत्यापामार्गं दन्तपवनं घृतमधुलिप्तं भद्रो नो अग्निराहुत इत्येतेनानिष्ठीवन् संवत्सरं भक्षयन् सुभगो भवति भगो न चित्र इत्येताभ्यां मञ्जयन् सुभगो भवति (२)

'यदिन्द्रो अनयत्'-इत्येकं साम, 'उच्चा ते इति' अस्य 'नवमदशमे' द्वे; एवं त्रयाणा मेतेषां मध्ये इच्छया 'एकम्', 'अनेकं वा' द्वे वेत्यर्थः, 'सर्वाणि वा' त्रीणि वा सदा 'प्रयुञ्जानः सुभगो भवति' इति।

